धावन् खेलने
गायन् ह्लादने....

# हर्षस्य वर्धने
# अस्त्येव हस्ते फन्बैट ।




काम्को प्रदत्त फन्बैट ।

क्रीम्पूरित स्वादिष्ट चाकलेट
अन्तस्थो चटचटायमान वेफर
तदावृत्य मधुरतम चाकलेट ।

अधिकाधिकं कोलाहल प्रोत्साहाय च ।

काम्को लिमिटेड, मङ्गलूर ।

*भारतस्य अतिविस्तृत, अतिनवीन। कार्मिकस्थानस्य प्रदानम् ।*

Other Campco chocolates: Milk / White / Treat / TURBO / Eclairs / mega bite / Playtime / RUBIES / TOFFEE / Campco beverages: WINNER / COCOA

R K SWAMY/CL/7804/SN




# A special offer for readers of Chandamama only.







**A. WOBBIT:**
Size : 13.5 inches (height)
Price: Rs. 83.00
Add : Rs. 4.80 General Sales Tax for orders placed within Tamil Nadu.
Rs. 8.30 Sales Tax for orders placed outside Tamil Nadu.

**B. TEDDY:**
Size : 10.5 inches (height)
Price: Rs. 93.00
Add : Rs. 5.35 General Sales Tax for orders placed within Tamil Nadu.
Rs. 9.30 Sales Tax for orders placed outside Tamil Nadu.

**C. JUMBO:**
Size : 7 inches (height)
Price: Rs. 68.00
Add : Rs. 3.90 General Sales Tax for orders placed within Tamil Nadu.
Rs. 6.80 Sales Tax for orders placed outside Tamil Nadu.

**D. BOW WOW:**
Size : 6 inches (height)
Price: Rs. 45.00
Add : Rs. 2.60 General Sales Tax for orders placed within Tamil Nadu.
Rs. 4.50 Sales Tax for orders placed outside Tamil Nadu.

**E. FATHER HARE:**
Size : 6 inches (height)
Price: Rs. 25.00
Add : Rs. 1.45 General Sales Tax for orders placed within Tamil Nadu.
Rs. 2.50 Sales Tax for orders placed outside Tamil Nadu.

Look out for Mama Hare and Baby Hare in our next offer to complete the Happy Hare Family.



Our way of saying you're very special to us is by making you an offer that's every bit as special. The chance of being the very first people to own a Cuddles toy. At a price that's — you guessed right — special! And there's still more you can save. On ordering any of the toys here, you automatically become eligible for discounts on subscription to Chandamama. Rs.6 off on 12 issues and Rs.15 off on 24 issues.









Dear Chandamama,

I have read about your MAIL-A-TOY scheme and have had a good look at the Cuddles range.

Please send me (tick one or more):

☐ Wobbit ☐ Teddy ☐ Father Hare ☐ Jumbo ☐ Bow Wow

I also understand that I can avail a special discount if I subscribe to Chandamama. I would like to subscribe to Chandamama for —

☐ One year (Rs.30 instead of Rs.36)

☐ Two years (Rs.57 instead of Rs.72)

☐ Sorry, I'm not interested in the subscription offer.

Enclosed please find a Postal Order/Money Order for Rs.............. drawn in favour of Chandamama Toytronix Pvt Ltd.




Note : This offer is valid only up to 30-6-1990.

I look forward to receiving the toy(s) within a month. I understand that if I am not fully satisfied with the toy(s), I am entitled to a complete refund if I mail it/them back within a week of receiving it/them.

My name: .................................... Date of birth: ....................

Mailing address: ....................................................

....................................................................

What are my favourite:

Magazines/Comics : ..................................................

TV Programmes : .................................. Toys ..................

Pastimes : Reading/Toys/Games/TV/Video/Video games/Others : ...............






All you have to do is to fill the coupon alongside and mail it to us at Chandamama Toytronix Pvt Ltd, Chandamama Buildings, 188, N.S.K. Salai, Vadapalani, Madras 600 026. Within a month of our receiving your request, you will receive your Cuddles. Just in case you are not fully satisfied, we assure you a complete refund of the price if you mail the toy(s) back to us within a week.

**NOTE:**
Please specify the doll/dolls you would like to have by putting a tick-mark against the respective doll/dolls listed in the coupon. Also, write your address in full and specify the mode of payment i.e. whether you are remitting the price of the doll/dolls by Postal-Order or Money-Order. Please make sure that the exact price is paid. This is to avoid any difficulty in processing your orders. Those who have already sent their coupons without being specific on these points should write to us again separately, to enable us to send them the doll/dolls as soon as possible.




# CUDD

# ES

Manufactured in technical collaboration with Sammo Corporation, South Korea.

**Chandamama Toytronix Private Limited,**
Chandamama Buildings,
188, NSK Salai, Vadapalani, Madras - 600 026.

Mudra:M:CT:378

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'


अयि मान्याः,

'चन्दमामा' अहं सप्तमे वर्षे पदं स्थापयन्ती अस्मि। सप्तभिः पदैः मैत्री सिध्यति इति वदन्ति प्राचीनाः। अतः एतावता भवतां मम च मैत्री दृढा जाता इति विश्वस्य सानुरोधं किञ्चित् निवेदयामि–

भवतां संस्कृतप्रीतिः वाङ्मात्रा न खलु? 'सर्वे संस्कृते प्रीतिमन्तः स्युः' इति वचनम् आत्मानम् अपि अविहाय एव खलु? एवं तर्हि भवद्भिः यत् उच्यते तदनुगुणं व्यवहारः जीवनं च स्यात् इति कश्चित् निरीक्षते चेत् तत् अनुचितं न भवेत्। सर्वेषु अपि व्यवहारेषु (संस्कृतसम्बद्धेषु कार्यक्रमेषु केवलं न) संस्कृतप्रीतिः प्रकटिता स्यात्। भवतां गृहे संस्कृतभाषा विलसेत् चापि। भवन्तः यदि संस्कृतज्ञाः, यदि च संस्कृतज्ञत्वेन आत्मानं परिचाययितुम् इच्छन्ति, तर्हि संस्कृतेन सम्भाषणं विना, गृहे संस्कृतेन व्यवहारं च विना स्थातुं न अर्हन्ति।

कर्तव्यभारात् भीताः भवन्तः यदि वदेयुः– 'अहं संस्कृते प्रीतिमान् न। सहानुभूतिमान्, तावदेव' इति, तर्हि एतद्विषये भवतः अनुरोद्धुं न अर्हामि अहम्। 'संस्कृतप्रीतेः निकषः न वचनमात्रम्, अपि तु व्यवहारः' इति सदा भवतां मनसि भवतु।


सम्पुटः–७ एप्रिल्–१९९० सञ्चिका–१

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००







रसप्रश्नाः—

# अनुवर्तते युद्धम्

(इन्द्रजिता प्रयुक्तेन सर्पास्त्रेण रामलक्ष्मणौ बद्धौ जातौ। तदा वानरपक्षे सर्वथा निराशा प्रसृता। रावणपक्षे च विजयोत्साहः। विजयोन्मत्तः रावणः सीतां पुष्पकविमानेन प्रेषयित्वा मूर्च्छितौ रामलक्ष्मणौ प्रदर्शितवान्। रामलक्ष्मणयोः पुनश्चेतनानन्तरं युद्धम् अनुवृत्तम्। वाल्मीकिरामायणस्य एतं कथाभागम् आश्रित्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I सर्पास्त्रकारणतः मूर्च्छां गतौ रामलक्ष्मणौ प्रदर्शयितुं रावणः सीतां पुष्पकविमानेन प्रेषितवान्। तदा सीतया सह का गतवती?
(अ) लम्बकर्णा। (आ) त्रिजटा। (इ) विकेशा।

II रामलक्ष्मणयोः सर्पास्त्रं कथम् अपगतम् अभवत्?
(अ) हनूमता आनीतस्य औषधमूलस्य प्रभावतः।
(आ) तौ स्वयं सचेतनौ जातौ।
(इ) गरुडः आगत्य तयोः बन्धनम् अपनीतवान्।

III रामलक्ष्मणौ अपायात् मुक्तौ दृष्ट्वा वानराः सर्वे सन्तुष्टाः। एतत् दृष्ट्वा कः राक्षसनायकः युद्धार्थम् आगतवान्?
(अ) इन्द्रजित्। (आ) धूम्राक्षः। (इ) प्रहस्तः।

IV एवम् आगतं राक्षसराजं कः केन मारितवान्?
(अ) हनूमान् पर्वतशिखरपातनेन।
(आ) अङ्गदः गदाप्रहारेण।
(इ) श्रीरामः बाणप्रयोगेन।

उत्तराणि—

I–(आ). II–(इ). III–(आ). IV–(अ).

वार्ताविशेषाः

# पनामादेशस्य उपरि आक्रमणम्

पनामादेशे सैन्यबलस्य आधारेण शासनकार्याणि निर्वहन्तं जनरल् अण्टोनियो नोरियेगवर्यं पदच्युतं कर्तुं गतस्य डिसेम्बरमासस्य २० तमे दिनाङ्के अमेरिकादेशेन आक्रमणं कृतम्।

नोरियेगस्य नायकत्वे स्थिते अपि, निर्वाचने प्रतिपक्षीयः नायकः एण्डोरा विजयं प्राप्तवान्। सः अधिकारसूत्राणि ग्रहीतुं यथा न शक्नुयात् तथा कुर्वन् नोरियेगः अधिकारपीठं कपिमुष्ट्या गृहीतवान्।

'एतत् नोरियेगस्य दोषः स्यात् नाम, तथापि परदेशीयस्य आन्तरङ्गिके व्यवहारे अमेरिकादेशः चञ्चूप्रवेशं कर्तुं नार्हति' इति प्रपञ्चे अधिकसङ्ख्याकाः देशाः स्वाशयं प्रकटितवन्तः।

'नोरियेगः न केवलं सर्वाधिकारी, अपि तु विरोधिनां दारुणदण्डने ख्यातः अपि। गतेषु षट्सु वर्षेषु तेन असङ्ख्या विरोधिनः निर्दयं यमपुरीं प्रेषिताः। स्वस्य अधिकारस्य स्थिरीकरणार्थं सः, युवकयुवतीनां जीवनं नरकसदृशं कर्तुं समर्थानि मादकद्रव्याणि अक्रममार्गेण विदेशान् प्रति प्रेषयन् कोटिशः रूप्यकाणि सम्पादितवान्। अतः एव अमेरिकादेशेन मध्ये प्रवेशः कृतः' इति



अमेरिकापक्षीयाः स्वपक्षं समर्थयन्ति।

मध्य-अमेरिकाप्रदेशे स्थितेषु सप्तसु देशेषु पनामा अपि अन्यतमः। गोटेमाला, एल्साल्वेडार्, हाण्डुरास्, निकरागुवा, कोस्टारिका, बेलीज्, इत्येते अन्ये षट्।

उष्णवलयऋतुपरिसरेण युतानां हरिद्वर्णमयानां पर्वतानां मध्ये तदा तदा विस्फोटं जनयद्भिः अग्निपर्वतैः युक्तः लध्वाकारकः सुन्दरः देशः पनामा। अन्ताराष्ट्रियसमुद्रमार्गे पनामाकुल्यायाः महत्त्वपूर्णं स्थानम् अस्ति। तथापि एतस्मिन् देशे निवसन्तः विंशतिलक्षं जनाः सुखेन तु न आसन्। राजनैतिकनेतॄणां परस्परसङ्घर्षस्य कारणतः ते सदापि पीडिताः भवन्ति स्म।

'मादकद्रव्याणां पीडायाः निवारणार्थं प्रपञ्चे सर्वैः देशैः प्रयत्नः करणीयः। अन्यथा युवपरम्परायाः, सर्वकाराणां च पतनं स्यात्' इति विवेकं बोधयति पनामाघटना।

# र स वा र्ताः




## धनिकानां भूमिः

आयस्य मध्यभावस्य परिशीलनं कृतं चेत् ज्ञायते यत् अत्यधिकाः धनिकाः स्विड्जर्ल्याण्ड्देशे एव सन्ति इति। विश्ववित्तकोषः एतं विषयम् स्वप्रतिवेदने प्राकाशयत्।

## भूकम्पस्य पूर्वसूचना

लास् एञ्जलिस् प्रदेशे त्रिभिः मित्रैः सम्भूय एकं लघु यन्त्रं रूपितम् अस्ति। एतत् यन्त्रं गृहे स्थाप्यते चेत् भूकम्पात् पूर्वम् उद्गच्छन्ति कम्पनानि ज्ञात्वा एतत् अपायसूचकं ध्वनिम् उत्पादयति। एतादृशं विशिष्टं यन्त्रं सद्यः एव विपणिषु अल्पेन मूल्येन लब्धुं शक्यम्।





# देवीशाटिका

गणनाथः कस्मिंश्चित् सुवर्णापणे कार्यं करोति स्म। सुवर्णापणस्य यजमानः इतोऽप्यधिकं धनं सम्पादनीयम् इति इच्छया आपणं पिधाय कुटुम्बेन सह समुद्रवाणिज्यार्थं देशान्तरं गतवान्। अतः गणनाथः उद्योगविहीनः जातः।

समुद्रवाणिज्यार्थं गनमसमये सः वणिक् गणनाथाय सहस्रं रूप्यकाणि दत्त्वा– "प्रामाणिकतया भवान् उद्योगं यत् कृतवान् तदर्थम् एतत् उपायनम्। अन्यत्र कुत्रापि उद्योगम् अन्विष्यतु भवान्" इति उक्तवान्।

गणनाथः गृहम् आगत्य पत्नीं प्रवृत्तं समग्रं निवेदितवान्। तदा पत्नी गोमती पतिम् उक्तवती– "उद्योगः गतः इति चिन्तां मा करोतु। हस्ते सहस्रं रूप्यकाणि सन्ति खलु। तेन वाणिज्यं करवाव आवाम्। सोमपुरं गत्वा भवान् काश्चन चित्ररहिताः शाटिकाः आनयतु। क्षालनेन यासां वर्णापगमः शैथिल्यं वा न भवति तादृशीः शाटिकाः क्रीणातु। अहं तासाम् उपरि रमणीयतया पुष्पाणां लतादीनां च चित्रं लेखिष्यामि। तदा तासां शोभा वर्धिष्यते। अधिकेन मूल्येन तासां विक्रयणं करोतु भवान्। तेन, उद्योगेन यावत् प्राप्येत ततोऽप्यधिकं सम्पादितं भविष्यति" इति।

पत्न्याः सूचनायाः अनुसारं गणनाथः सोमपुरतः चित्ररहिताः उत्तमाः शाटिकाः आनीतवान्। गोमती तासु शाटिकासु रमणीयतया पुष्पाणि लतादीनि च चित्रितवती। पत्न्याः कलानैपुण्यं दृष्ट्वा गणनाथः नितरां सन्तुष्टः।

एतादृश्याः शाटिकायाः किं नाम निश्चेतव्यम् इति गोमती बहुधा चिन्तितवती। किन्तु उत्तमं नाम किमपि समये न स्फुरितम्।

"श्रीमाता"



"उत्तमं नाम कालान्तरे विचिन्त्य निश्चिनुमः। इदानीं याः शाटिकाः सिद्धाः ताः नगरे विक्रीय आगच्छतु। समीचीनं नाम न प्राप्तम् इति कारणतः विक्रयणस्य स्थगनं मास्तु" इति सूचितवती गोमती।

गणनाथः ताः शाटिकाः स्वीकृत्य नगरं गतवान्। जनाः शाटिकायाः सौन्दर्येण आकृष्टाः अभवन्। किन्तु मूल्यं श्रुत्वा, एषा शाटिका तावत् मूल्यम् अर्हति वा न वा इति चिन्तयन्तः मौनं प्रतिगतवन्तः। अतः सायङ्कालपर्यन्तं स्थितं चेदपि एकस्याः अपि शाटिकायाः विक्रयणं न जातम्। गणनाथः खेदेन निःश्वसन् ग्रामं प्रति प्रस्थितवान्।

प्रत्यागमनसमये अन्धकारः प्रसृतः। गणनाथः निरन्तरचलनेन नितरां श्रान्तः। सः श्रान्तिपरिहारार्थं किञ्चित् कालं कुत्रापि उपवेष्टुम् इष्टवान्। ग्रामसीमायां स्थितस्य देव्याः आलयस्य पुरतः उपविष्टवान् च। तत्रैव तस्य नेत्रे निमीलिते जाते।

अर्धघण्टायाः अनन्तरं सः जागरणं प्राप्य उत्थाय शाटिकाग्रन्थिं शिरसि आरोप्य मन्दं गन्तुम् उद्युक्तः। तावता शाटिकाग्रन्थिः केनचित् स्पृष्टः इव। सः परिवृत्य दृष्टवान्। देवालयस्था देवी एव प्रत्यक्षा जाता अस्ति!

आश्चर्यचकितः गणनाथः देवीं भक्त्या नमस्कृत्य– "अम्ब! जगन्मातः! एषोऽहं नमस्करोमि" इति उक्तवान्।

"भवतः शिरसि स्थिते ग्रन्थौ उत्तमाः शाटिकाः सन्ति इति भाति" इति उक्तवती देवी।

"आम् अम्ब! शाटिकाः तु अपूर्वाः एव। एताः विक्रेतुं नगरं गतवान् अहम्। किन्तु मम दौर्भाग्यकारणतः एका अपि शाटिका न विक्रीता" इति उक्तवान् गणनाथः।

"शाटिकाः प्रदर्शयतु तावत्" इति उक्तवती देवी।

देव्याः शरीरकान्तिः तत्र सर्वत्र प्रसृता आसीत्। तस्मिन् प्रकाशे शाटिकाः प्रदर्शितवान् गणनाथः। एकैकां शाटिकां दृष्ट्वा देवी– 'अहो, एतस्याः वर्णः!' 'अहो, एतस्याः चाकचक्यता' 'अहो, लतायाः पुष्पाणां च सौन्दर्यम्' इत्येवं वदन्ती सन्तोषं

प्रकटितवती।

सर्वाः शाटिकाः दृष्ट्वा आत्मना धृतां शाटिकां प्रदर्शयन्ती– "अत्र पश्यतु। अर्चकेन सप्ताहतः एषा एव असुन्दरी शाटिका धार्यमाणा अस्ति। एतां शाटिकां धर्तुं मम इच्छा सर्वथा नास्ति। भवदीयाः शाटिकाः तु अपूर्वाः" इति उक्तवती देवी।

"किमर्थम् एवं वदति भवती? भक्ताः तदा तदा उत्तमाः शाटिकाः भवत्यै अर्पयन्ति एव खलु? अतः का न्यूनता भवत्याः?" इति पृष्टवान् गणनाथः।

"किं वदामि मम दुर्गतिविषये? भक्ताः उत्तमाः शाटिकाः अर्पयन्ति इति तु सत्यम् एव। किन्तु अर्चकस्य पत्नी ताः शाटिकाः धाष्ट्र्येन स्वायत्तीकरोति। अतः अर्चकः प्राचीनया असुन्दर्या एव शाटिकया माम् अलङ्करोति। धर्मदर्शी तु एतादृशेषु विषयेषु अवधानं न प्रदर्शयति। अतः यत् क्रियते तत् आक्षेप्तुं कोऽपि नास्ति इति चिन्तयति अर्चकः" इति खेदेन उक्तवती देवी।

"अम्ब! मम शाटिकां दृष्ट्वा भवती सन्तुष्टा यत् तेन अहम् आत्मानं धन्यं भावयामि। याः रोचन्ते ताः स्वीकरोतु भवती" इति उक्त्वा समीचीनाः काश्चन शाटिकाः तस्यै अर्पयित्वा ततः गन्तुम् उद्युक्तः गणनाथः।

"अये, शाटिकानां मूल्यं प्राप्तव्यं खलु भवता? श्वः प्रातः धर्मदर्शिनः गृहं गत्वा मया द्विसहस्ररूप्यकात्मिकाः शाटिकाः क्रीताः इति वदतु। सः धनं दास्यति। तेन भवतः मम च






हितं सेत्स्यति'' इति उक्तवती देवी।

गणनाथः सन्तोषेण गृहं गतवान्। प्रत्यानीताः शाटिकाः एकत्र स्थापयित्वा पत्नीं प्रवृत्तं समग्रं निवेदितवान्। एतत् श्रुत्वा गोमती अपि सन्तोषं प्रकटितवती।

अनन्तरदिने गणनाथः धर्मदर्शिनः गृहं गत्वा देव्या कृतं शाटिकाक्रयणं निवेद्य धनं पृष्टवान्। तत् श्रुत्वा धर्मदर्शी गणनाथं परीक्षादृष्ट्या पश्यन् कोपेन उक्तवान्– ''भवतः बुद्धिः भ्रष्टा तु न खलु? देवी भवत्तः शाटिकां कथं वा क्रेतुम् अर्हति? मानवाः देवीं कथं वा द्रष्टुं शक्नुयुः? रात्रौ स्वप्नः कोऽपि दृष्टः वा? अथवा सुरां पीत्वा एवम् असम्बद्धं जल्पन् अस्ति वा? निर्गच्छतु इतः'' इति।

''श्रीमन्! मम वचने विश्वसितु कृपया। अर्चकस्य व्यवहारस्य कारणतः मया एवं स्वयं शाटिका क्रेतव्या अभवत् इति उक्तवती देवी। आवश्यकं चेत् अर्चकस्य व्यवहारं परीक्ष्य जानातु भवान्'' इति विनयेन उक्तवान् गणनाथः।

''अस्तु तावत्। सर्वं परीक्ष्य जानामि। भवतः असत्यकथनं प्रमाणितं भवति चेत् भवन्तं कारागारं प्रेषयिष्यामि'' इति वदन् धर्मदर्शी अर्चकस्य गृहं प्रति प्रस्थितवान्।

अर्चकस्थ गृहं देव्याः आलयस्य समीपे एव आसीत्। सूर्योदयः जातः चेदपि अर्चकः आलस्येन सुप्तः एव आसीत्। धर्मदर्शिनः आह्वानं श्रुत्वा सः झटिति उत्थाय बहिः आगतवान्।

धर्मदर्शी गणनाथं प्रदर्शयन्– ''एषः कश्चन शाटिकाविक्रेता। 'ह्यः रात्रौ देवी प्रत्यक्षीभूय मम सकाशात् द्विसहस्ररूप्यकाणां शाटिकाः क्रीतवती' इति वदति एषः। एतेन यत् उच्यते तत् यथार्थं स्यात् वा?'' इति पृष्टवान्।

''देवी एतस्मात् शाटिकाः क्रीतवती इति! सर्वथा असम्भाव्यम् एतत्। एषः कश्चन वञ्चकः स्यात्। एतस्य वचने विश्वसन् भवान् एतावद्दूरम् आगतवान् वा?'' इति वदन् गणनाथं कोपेन दृष्टवान् अर्चकः।

धर्मदर्शी अपि कोपेन गणनाथं पश्यन्– ''भवतः वचने कोऽपि न विश्वसिति इति

ज्ञातं खलु? देव्याः आलयम् अपि गत्वा पश्याम तावत्" इति उक्त्वा देवालयस्य अन्तः गतवान्। गर्भगृहं तु कीलितम् एव आसीत्। देव्याः समीपे काश्चन शाटिकाः दृश्यन्ते स्म। देव्याः शरीरे तु प्राचीना एव शाटिका दृश्यते स्म।

गर्भगृहस्य द्वारम् उद्घाट्य स्थितवन्तम् अर्चकं कोपेन पश्यन् धर्मदर्शी पृष्टवान्– "अये, ह्यः मम पुत्रीं पतिगृहं प्रेषयन् अहं देव्यै कौशेयशाटिकाद्वयम् अर्पितवान् आसम्। अद्यैव रात्रौ एकां शाटिकां धारयिष्यामि इति उक्तवान् आसीत् भवान्। सा शाटिका कुत्र?" इति।

अर्चकः शिरः अवनमय्य मौनं स्थितवान्। तदा गणनाथः धर्मदर्शिनम् उक्तवान्– "शाटिका कुत्र इति एतस्य पत्नी प्रष्टव्या, न तु एषः। पत्न्याः दासः एषः किं वा वदेत्?" इति।

"अहो, एवं वा कथा! भक्तैः अर्पिताः शाटिकाः भवतः पत्न्याः शरीरम् अलङ्कुर्वन्ति, न तु देवीम्। एवं खलु?" इति कोपेन उक्तवान् धर्मदर्शी।

देवालये यः अव्यवहारः प्रचलति स्म स च इदानीं धर्मदर्शिना ज्ञातः। सः तत्क्षणे एव अर्चकं उद्योगतः निष्कासितवान्। गणनाथाय द्विसहस्रं रूप्यकाणि दत्त्वा कृतज्ञतावचनानि उक्तवान् चापि।

एषा वार्ता समीपस्थेषु सर्वेषु ग्रामेषु प्रसृता। देव्याः भक्ताः एतेन प्रसङ्गेन सन्तुष्टाः। केचन गणनाथस्य गृहम् आगत्य उक्तवन्तः– "भोः, तद्दिने देव्यै भवता शाटिकाः दत्ताः खलु? ताः देवीशाटिकाः प्रदर्शयतु। वयं क्रेतुम् इच्छामः" इति।

एवं गणनाथस्य शाटिकानां विक्रयणम् आरब्धम्। एतत्सर्वं दृष्ट्वा गोमती पतिम् उक्तवती– "एतादृशीनां शाटिकानां नाम देवीशाटिका इत्येव भवतु। जनैः एव एवं नाम कृतम्। उत्तमं नाम एतत्। दयामयी देवी भवतः शाटिकाः प्रसिद्धाः कृतवती। तां प्रतिदिनं स्मराम वयम्" इति।



# परीक्षा

गृहोपयोगीनि वस्तूनि आनेतुं मुकुन्दः आपणं गतवान्। वस्तूनि क्रेतुं तत्र बहवः आगताः आसन्। सर्वेषां निर्गमनं यावत् प्रतीक्षमाणः मुकुन्दः अन्ते स्वेन क्रेतव्यानि वस्तूनि सूचितवान्।

आपणिकः मुकुन्देन सूचितानि सर्वाणि वस्तूनि दत्तवान्। वस्तूनां मूल्यं चापि सूचितवान्। मुकुन्दः तावत् धनं दत्त्वा परीवर्तं प्रतिस्वीकृतवान्।

प्रस्थातुम् उद्युक्तः मुकुन्दः आपणिकेन दत्तं परीवर्तं गणितवान्। यजमानेन दश रूप्यकाणि अधिकतया दत्तानि आसन्।

सः तत् धनम् आपणिकाय प्रत्यर्पयन्– "प्रमादवशात् भवता अधिकं दत्तम्। धनविषये सर्वदा अपि जागरूकता अपेक्षिता" इति उक्तवान्।

तदा आपणिकः– "शतरूप्यकेषु दातव्येषु, भवान् द्विशतं रूप्यकाणि दत्तवान् आसीत्। धनविषये अनादरवन्तः एव एवं यच्छन्ति। एतादृशे सन्दर्भे धनस्य प्रत्यर्पणस्य अपेक्षया अपि निर्धनाय दानम् एव वरम्। अतः अहं परीक्षां कर्तुं निश्चितवान्। दश रूप्यकाणि अधिकतया दत्तवान्। यदि भवान् तत् धनं न प्रत्यर्पयेत् तर्हि अहम् अपि शतं रूप्यकाणि न प्रतिदद्याम्। इदानीं तु भवतः प्रामाणिकव्यवहारेण सन्तुष्टः अस्मि। स्वीकरोतु एतानि शतं रूप्यकाणि" इति उक्त्वा मुकुन्दाय शतं रूप्यकाणि दत्तवान्।






## ६

(सेनापतिः वीरसिंहः सुमेधराज्यस्य सिंहासनं स्वायत्तीकृतवान्। राज्ये एषा वार्ता सडिण्डिमघोषं प्रसारिता। राज्ञः शान्तिदेवस्य तत्परिवारस्य च का गतिः इति कश्चन युवकः पृष्टवान्। तथा पृष्टवन्तं युवकं राजभटाः बद्ध्वा नीतवन्तः। वृद्धः मन्त्री वीरसिंहस्य राजत्वं न अङ्गीकृतवान्। अतः तस्य मारणार्थं योजना कृता। किन्तु कश्चन अपरिचितः वीरः मन्त्रिणं रक्षितवान्। तदनन्तरम्......।)

अनन्तरदिने सूर्योदयसमये वीरसिंहः राज्ञः शान्तिदेवस्य अनुकरणं कुर्वन् राजोद्याने इतस्ततः सञ्चरन् आसीत्। राजा शान्तिदेवस्तु प्रकृतेः आराधकः। सः सदापि प्राकृतिकं सौन्दर्यं पश्यन् मनसः शान्ततां सम्पादयति स्म। समचित्तस्य तस्य मुखे अपूर्वा कान्तिः शोभते स्म। दर्शनमात्रेण गौरवभावना उत्पन्ना भवति स्म। किन्तु वीरसिंहः तादृशः न। आत्मनः विषये अपि तस्य प्रीतिः न आसीत्। एवं स्थिते अन्येषां विषये प्रीतिः कथम्? प्राकृतिकसौन्दर्यस्य विषये तस्य अल्पः अपि आदरः न आसीत्। तस्य मनः सदा भयग्रस्तं भवति स्म। 'शान्तिदेवः कुत्र गतवान् स्यात्? मम विरोधिनः राज्ये के के स्युः? ते सर्वे सम्भूय मम उपरि आक्रमणं कुर्वन्ति चेत् का गतिः?' इत्येव सदा चिन्तयन् भवति सः। अतः मनःशान्तिः एव नास्ति तस्य।



धैर्यहीनानां प्रायः एतादृशी एव परिस्थितिः। तेषु आत्मविश्वासः न भवति। या वञ्चना पूर्वं कृता, यश्च दोषः आचरितः, ततः तेषु अपराधिभावः उत्पद्यते। एषः अपराधिभावः तान् निरन्तरं दहति। अतः तादृशाः अहोरात्रं चिन्तामग्नाः भवन्ति। न उत्साहः तेषां, न वा मनसः शान्तिः। अल्पेन अपि कारणेन उद्विग्नाः भवन्ति ते। अविचार्य निर्णयं वदन्तः पुनः पुनः दोषान् कुर्वन्ति। ते दोषाः तान् पुनरपि दहन्ति। रात्रौ निद्रां न प्राप्नुवन्ति ते। निद्रा प्राप्ता चेदपि दुःस्वप्नं दृष्ट्वा झटिति जागरिताः भवन्ति। निद्राभावतः आदिनं मनसः अस्वास्थ्यम्। एतादृशान् दृष्ट्वा एव प्रायः महाकविना भर्तृहरिणा उक्तम्– 'विवेकभ्रष्ठानां भवति विनिपातः शतमुखः' इति।

"महाप्रभो!" इति सम्बोधनं श्रुत्वा झटिति परिवृत्य दृष्टवान् वीरसिंहः। दलपतिः कश्चित् विनयेन तत्र स्थितः आसीत्।

"का वार्ता?" इति पृष्टवान् वीरसिंहः।

"प्रभो! यत् न भवितव्यम् आसीत् तत् प्रवृत्तम्" इति उक्तवान् दलपतिः।

"तादृशं किं प्रवृत्तम्? स्पष्टं वदतु तावत्। राज्ञः मम पुरतः अपि किमर्थम् अस्पष्टं कथनम्?" इति कोपेन उक्तवान् वीरसिंहः।

परितः दृष्टिं प्रसार्य कोऽपि समीपे नास्ति इति निश्चित्य मन्दस्वरेण उक्तवान् दलपतिः– "वृद्धः मन्त्री कथमपि सजीवं पलायितवान्। तत् कथम् इति तु न ज्ञायते" इति।

"किम्? वृद्धः मन्त्री पलायितः इति? एतदर्थं किं भवान् भीरून् नियोजितवान् आसीत्? वृद्धः सः कथं पलायितुं शक्तः? किं प्रवृत्तं तत्र?" इति कोपेन पृष्टवान् वीरसिंहः।

"किं प्रवृत्तम् इति को वा वदेत्? तस्य संहारार्थं प्रेषितानां त्रयाणां भटानाम् अपि शिरच्छेदः जातः अस्ति। भीमतुल्यानाम् अपि तेषां तादृशी गतिः जाता" इति उक्तवान् दलपतिः।

"अलं कथनेन। अजतुल्याः ते। तान् भीमबलान् वदति खलु? ते आकारेण केवलं भीमतुल्याः, न तु पराक्रमेण" इति कोपेन गर्जितवान् वीरसिंहः।

"प्रभो, क्षन्तव्यः अहम्। वस्तुतः अपि ते भीमतुल्याः एव आसन्। कथं ते मृताः इति प्रत्यक्षं केनापि न दृष्टम्। प्रातः तेषां शवाः दृष्टाः अस्माभिः। वृद्धः मन्त्री तान् मारितवान् न स्यात्। यतः तादृशं सामर्थ्यं नास्ति तस्य। तेन कृतं खड्गग्रहणम् अस्मासु केनापि इतः पूर्वं न दृष्टम्। अन्यच्च सः शिवालयं प्रति गमनसमये तद्दिने अपि निरायुधः एव गतवान् आसीत्। अतः तादृशेन, तत्रापि वृद्धेन, मन्त्रिणा वीराः भटाः मारिताः इति तु न विश्वासार्हम्। अन्येन तृतीयेन केनचित् एतत् कार्यं कृतं स्यात्" इति उक्तवान् दलपतिः।



"एतत् केन कृतं स्यात् इति तर्क्यते भवता?" इति पृष्टवान् वीरसिंहः।

"केन कृतं स्यात् इति ज्ञातुं गूढचरान् नियोजितवान् अस्मि। अल्पे एव काले सर्वं ज्ञायते" इति उक्तवान् दलपतिः।

क्षणकालं चिन्तयन् स्थितः वीरसिंहः पुनः उक्तवान्— "अस्मद्विरोधितया कुतन्त्रं किमपि प्रवर्तते इति तु सत्यम् एव। विरोधः अङ्कुरावस्थायाम् एव उन्मूलनीयः। अन्यथा अस्माकं प्राणानाम् एव अपायः भवेत्। एते विरोधिनः यावत् एकत्रिताः न भवन्ति ततः पूर्वम् एव ते समूलं नाशनीयाः। परह्यः शान्तिदेवविषये कश्चन युवकः पृष्टवान् खलु? सः कुत्र अस्ति इदानीम्? सः अपि कुतन्त्रकर्तृषु अन्यतमः स्यात्" इति।

"तस्य युवकस्य नाम वसन्तः इति। किन्तु सः विरोधिपक्षीयः न स्यात्। शान्तिदेवे विशेषादरः तस्य। अतः शान्तिदेवस्य वार्तां श्रोतुम् इच्छति सः, तावदेव। सामान्यः नागरिकः सः" इति उक्तवान् दलपतिः।

"अये वृथा मा प्रलपतु। विजयिनः पक्षस्य आश्रयणं नागरिकाणां स्वभावः। अस्मद्विरोधितया एकाकितया व्यवहर्तुं कथं धैर्यं स्यात् तस्य? अन्यस्य प्रोत्साहः तस्य स्यात् एव। अतः कठोरं दण्डयतु तम्। तदा वस्तुस्थितिं वदेत् सः" इति उक्तवान् वीरसिंहः।

"मया अपि तथैव कृतं महाप्रभो! चित्रहिंसाकारणतः तस्य समग्रे शरीरे व्रणाः। तथापि किमपि न उक्तं तेन" इति उक्तवान्

दलपतिः।

"एवं तर्हि तस्य शूलारोपणं करणीयम्। राजमार्गे आकर्षणपूर्वकं नीत्वा वध्यभूमौ मारयतु तम्। राजविरोधिनः का गतिः भवेत् इति सर्वेऽपि जानन्तु। एषः एव युक्तः क्रमः" इति आज्ञापितवान् वीरसिंहः।

"यथाज्ञापयति महाप्रभुः" इति वदन् दलपतिः वीरसिंहं नमस्कृत्य ततः निर्गतवान्।

राजविरोधिनः वसन्तस्य शूलारोपणवार्ता समग्रे नगरे सडिण्डिमघोषं प्रसारिता। नगरसीमायां स्थिते विशाले अङ्गणे शूलारोपणार्थं व्यवस्था कृता।

सन्तोषकरी वार्ता यथा तथैव भीतिकरी वार्ता अपि जनान् मेलयति एव। वसन्तस्य शूलारोपणं द्रष्टुं जनाः महता प्रमाणेन सम्मिलिताः।

'नागरिकाः सर्वे मां भयेन, भक्त्या, आदरेण च पश्येयुः' इति आलोच्य दलपतिः वर्णमयानि वस्त्राणि धृत्वा अश्वम् आरुह्य हस्तेन खड्गं गृहीत्वा सर्वेषां पुरतः गच्छन् "अपसरन्तु, अपसरन्तु सर्वे ...." इति वदन् आसीत्। वस्तुतः तु सर्वे मार्गस्य पार्श्वे एव तिष्ठन्ति, न तु मध्ये। तथापि आत्मनः राजप्रियत्वं प्रदर्शयितुम् इच्छन् सः गर्वेण उच्चैः 'अपसरन्तु' इति वदन् अस्ति।

दौर्भाग्यं नाम यदा सः एवं गच्छन् आसीत् तदा तुषारपातः आसीत्। अतः मम मुखं जनाः सम्यक् द्रष्टुं न अर्हन्ति इति खेदः दलपतेः।

अश्वारोही दलपतिः अग्रे। बद्धहस्तः



वसन्तः तस्य पृष्ठतः नीयमानः अस्ति। तम् उभयतः खड्गहस्ताः भटाः सन्ति। वसन्तः तु निर्विकारभावनया मौनं पदानि स्थापयन् अस्ति।

कस्यापि विरोधः नास्ति इत्यतः दलपतिः आयुधधारी सन् अपि विशेषजागरूकः नास्ति। भटाः अपि प्रायः तथैव सन्ति। 'अपसरन्तु' इति दलपतेः वचनं तु अनुवर्तते एव।

किन्तु अत्रान्तरे कोऽपि अकस्मात् अग्रे आगत्य दलपतिं बलात् नोदितवान्। अश्वात् पतितः दलपतिः वेदनाकारणतः उच्चैः आक्रन्दनं करोति। तावता सः अपरिचितः विद्युद्वेगेन अग्रे गत्वा वसन्तं बन्धविमुक्तं कृतवान्। दलपतिः एतत्सर्वम् अस्पष्टतया पश्यन् अस्ति।

परिवृत्य पश्यन्तं वसन्तं सः अपरिचितः पुरुषः उक्तवान्– "अश्वस्य उपरि मम पृष्ठतः उपविशतु" इति। स्वयं च अश्वम् आरुह्य सः अश्वस्य खलीनं गृहीतवान्। वसन्तः नितरां श्रान्तः व्रणितः चेदपि उत्साहेन उत्प्लुत्य अश्वम् आरुह्य तस्य वीरस्य पृष्ठतः उपविष्टवान्।

सः अपरिचितः वीरः वेगेन अश्वं चालयन् क्षणाभ्यन्तरे ततः निर्गतवान्।

वीरसिंहस्य भटाः तु आश्चर्येण भीत्या च एतत्सर्वं निर्निमेषं पश्यन्तः आसन्। किङ्कर्तव्यतामूढाः ते मौनं स्थितवन्तः आसन्। दलपतेः वेदनापूर्णम् आक्रन्दनं श्रुत्वा द्वित्राः भटाः तस्य समीपम् आगतवन्तः। तं





मन्दम् उत्थापितवन्तः च। तदीयः अश्वः तु भीत्या दूरं पलायितः आसीत्।

"कः सः माम् अश्वात् पातितवान्? कुत्र गतः सः? किमर्थं न बद्धः सः? मम अश्वः कुत्र? झटिति आनयन्तु तावत्" इति आज्ञास्वरेण उक्तवान् दलपतिः।

"अश्वः धावन् कुत्रापि गतः" इति उक्तवन्तः भटाः।

"अश्वः कुत्रापि गतः? हा हन्त!" इति वेदनया उक्तवान् दलपतिः।

"बन्दी अपि पलायनम् अकरोत् श्रीमन्" इति अवदत् कश्चन भटः।

"बन्दी अपि पलायनम् अकरोत्? इतः परं मम उद्योगस्य का गतिः? मम जीवनस्य वा का गतिः? हा हन्तः! पादः! कटिः! हा हा..." इति वदन् वेदनया तत्रैव उपविष्टः अभवत् दलपतिः।

सः अपरिचितः पुरुषः वायुवेगेन अरण्यं प्रविश्य कस्याश्चित् गुहायाः पुरतः अश्वं स्थगयित्वा वसन्तम् उक्तवान्– "अवतरतु तावत्" इति। स्वयं च अश्वात् अवतीर्णवान्। तम् अनुसरन् वसन्तः अपि अवतीर्णवान्।

"अपायात् मां रक्षितवान् भवान्। यदि भवान् आगतवान् न स्यात् तर्हि अहं प्राणैः वियुक्तः भवेयम्" इति कृतज्ञतापूर्वकम् उक्तवान् वसन्तः। नमस्कारभङ्ग्या स्थित्वा "भवान् कः इति ...." इति यावत् सः किमपि प्रष्टुम् उद्युक्तः, तावता अपरिचितः वीरः उक्तवान्– "तदस्तु तावत्। भवता कः अपराधः कृतः? किमर्थं ते भवतः वधार्थम् उद्युक्ताः आसन्?" इति।

"अहं भटान् सधैर्यं पृष्टवान् यत् शान्तिदेवः कुत्र गतः इति, सेनापतिः कथं सिंहासनम् आरूढवान् इति च। भटाः तु उत्तरं किमपि अयच्छन्तः मां बद्धवन्तः। अज्ञातपुरुषेण त्रयः भटाः मारिताः अभवन्। एतस्याः घटनायाः मम च सम्बन्धः स्यात् इति चिन्तयित्वा वीरसिंहेन मम वधः आदिष्टः। युक्ते समये भवान् देवः इव प्रत्यक्षीभूय मां रक्षितवान्" इति उक्तवान् वसन्तः।

तदा सः अपरिचितः पुरुषः पृष्टवान्–

"शान्तिदेवस्य भवतः च कः सम्बन्धः, येन भवान् तत्पक्षं समर्थयेत्? शान्तिदेवे एतावान् आदरः किमर्थं भवतः?" इति।

"महाराजः शान्तिदेवः प्रजाः पुत्रान् इव परिपालयति स्म। तादृशस्य महाप्रभोः गतिः का जाता इति प्रश्नः मम कर्तव्यं खलु? शान्तिदेवस्य वार्ता ज्ञातुं सर्वे कुतूहलिनः सन्ति। किन्तु कोऽपि धैर्येण न पृच्छति। वीरसिंहः सिंहासनम् बलात् आक्रम्य गर्वेण व्यवहरन् प्रजाः पीडयन् अस्ति" इति वस्तुस्थितिं निवेदितवान् वसन्तः।

"वीरसिंहस्य गर्वः भञ्जनीयः एव। किन्तु सर्वैः सम्भूय करणीयं तत्। ये तस्य विरोधिनः सन्ति ते सर्वे मेलनीयाः" इति गाम्भीर्येण उक्तवान् सः अपरिचितः वीरः।

"ह्यः रात्रौ ते त्रयः भटाः भवता एव मारिताः वा?" इति पृष्टवान् वसन्तः।

"आम्। किन्तु तेषां मारणं मम उद्देशः न आसीत्। ते असहायं मन्त्रिणं मारयितुम् उद्युक्ताः आसन्। मन्त्रिणः रक्षणार्थं तेषां मारणं विना अन्यः मार्गः न आसीत्। अधिकारिणः आज्ञानुसारं व्यवहरतां निरपराधिनः मारणम् अहं वस्तुतः न इच्छामि। कस्यापि प्राणानाम् अपायं विना भवन्तं रक्षितुं यत् अहं शक्तवान् तेन मम महान् सन्तोषः जातः। असमर्थः केवलं निरपराधिनः मारयन्ति। अहं धर्मस्य पक्षम् आश्रित्य कार्यं कुर्वन् अस्मि। धैर्यं मम धनम्। कार्यसाधनं मम व्रतम्" इति उक्त्वा सः अपरिचितः पुरुषः गुहां प्रविश्य कानिचन मधुराणि फलानि आनीय वसन्ताय दत्तवान्।

अनन्तरम् अमृतपुरीं प्रति गमनार्थं समीपतरम् अपायरहितं मार्गं निर्दिशन्— "भवान् अमृतपुरीं गत्वा पश्चिमस्यां दिशि स्थितं महाकालीमन्दिरं प्राप्नोतु। तत्रैव आवयोः पुनर्मेलनं भविष्यति। भवान् कालीमन्दिरे मम प्रतीक्षां कुर्वन् तिष्ठतु। अन्यान् अपि कांश्चन अहं प्रेषयिष्यामि। तान् स्वागतीकरोतु" इति उक्त्वा अश्वम् आरुह्य ततः कुत्रापि गतवान्। —(अनुवर्तते)






# छद्मवेषः

मध्यरात्रे एव सञ्चारम् अधिकतया इच्छन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! राज्ञः भवतः राजकार्यभारस्य निर्वहणदायित्वम् अपि अस्ति एव खलु? तथापि एवं मध्यरात्रे व्यर्थे कार्ये किमर्थम् उद्युक्तः भवान्? राज्यपालनकार्ये भवान् अन्यं नियोज्य आगतवान् स्यात् नाम। सः विश्वासद्रोहं न कुर्यात् इत्यत्र कः विश्वासः? सिंहासनम् आरुह्य अपि प्रामाणिकतया व्यवहरन् कदाचित् सौभाग्यवशात् प्राप्येत। नन्दिवर्धनेन तादृशः कश्चित् प्राप्तः आसीत्। नन्दिवर्धनस्य सिंहासनम् अन्यः कश्चित् कथम् आरूढवान् इति प्रश्नः वा

वेतालकथा



भवतः? तां कथां विस्तरेण श्रावयामि। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं मणिमेखलाराज्यं धर्मचन्द्रः नाम राजा पालयति स्म। तस्य शासनं धर्मसम्मतम् आसीत्। धर्मचन्द्रः मूर्तिमान् धर्मः एव इति जनाः वदन्ति स्म। तस्य शासने प्रजाः सुखेन आसन्। गच्छता कालेन धर्मचन्द्रः वृद्धः जातः। तदा सः चिन्तितवान् यत् पुत्रं नन्दिवर्धनं सिंहासने उपवेश्य अहं वानप्रस्थाश्रमं ग्रहीष्यामि इति।

नन्दिवर्धनः पितुः आशयं ज्ञातवान्। राज्यपरिपालनकार्यं क्लेशकरम् इति भावयति सः। शासननिर्वहणे आर्थिकव्यवहारे वा सः अदक्षः न। प्रजानां हितम् एव सः सदा इच्छति अपि। राज्यपालनम् अङ्गीकृतं चेत् अध्ययनादिकं परित्यक्तव्यं भवति इति तस्य आतङ्कः। किन्तु पितृवाक्यं तिरस्कर्तुं न शक्यते खलु? अतः सः विना विरोधं पट्टाभिषेकम् अङ्गीकृतवान्।

नन्दिवर्धनस्य सिंहासनारोहणात् अनन्तरम् अल्पे एव काले धर्मचन्द्रः दिवं गतः। नन्दिवर्धनः प्रजापालनं समर्थतया एव करोति। किन्तु तदा तदा सः एकान्ते उपविश्य पूर्वं क्रियमाणम् अध्ययनादिकं स्मरन् दीर्घं निःश्वसिति।

कदाचित् नन्दिवर्धनः विश्रान्तिगृहे आसीत्। तदा कश्चन दर्शनाकाङ्क्षी युवकः तत्र आगतवान्। राजा तम् अन्तः आहूय आगमनकारणं पृष्टवान्।

"मम नाम विश्वकर्मा। भवद्देशीयः एव अहम् अपि। छद्मवेषधारणे मम विशेषप्रावीण्यम् अस्ति। मां परीक्ष्य तृप्तः चेत् भवान् मह्यम् आस्थाने एकम् उद्योगं ददातु" इति उक्तवान् सः युवकः।

नन्दिवर्धनः तस्य परीक्षार्थं मन्त्रिणम् आदिष्टवान्। मन्त्रिणः सूचनानुसारं विश्वकर्मा, प्रतिवेशिराजस्य सिंहभूपतेः, सेनापतेः विक्रमस्य, मन्त्रिणः सुबुद्धेः च वेषं धृत्वा यथार्थम् अभिनयं प्रदर्शितवान्।

अनन्तरं नन्दिवर्धनस्य आदेशानुसारं

विश्वकर्मा राजानम् अपि अनुकृतवान्। एवम् अनुकरणसमये रूपं, वचनरीतिः, गमनम् इत्यादिकं सर्वं राज्ञः यथा तथैव आसीत्।

एतत् दृष्ट्वा नन्दिवर्धनः अभिनन्दनवचनानि उक्त्वा– "भवान् कानिचन दिनानि अत्र एव तिष्ठतु। अचिरात् एव योग्यम् उद्योगं दास्यामि" इति सूचितवान्।

नन्दिवर्धनः विश्वकर्मणः व्यवहारं सुसूक्ष्मं ज्ञातुं गुप्तचरान् नियोजितवान्। विश्वकर्मा सूक्ष्मग्राही, बुद्धिमान्, प्रामाणिकः, सत्यवान्, स्वामिभक्तः, चेति ज्ञातं नन्दिवर्धनेन। एतत् ज्ञात्वा नन्दिवर्धनः चिन्तितवान्– 'मम वेषं धृतवन्तं विश्वकर्माणं सिंहासने उपवेशयामि चेत् अहं ग्रन्थाध्ययनं कुर्वन् स्थातुम् अर्हामि' इति।

राज्ञः आशयं ज्ञात्वा विश्वकर्मा उक्तवान्– "महाराज! भवतः सेवकः अहम्। भवान् यथा वदति तथा कर्तुं सिद्धः अस्मि" इति।

एतदनन्तरं नन्दिवर्धनः राजप्रासादस्य समीपे अन्यस्मिन् भवने वसतिम् आरब्धवान्। स्वभवनस्य रक्षणार्थं विश्वासार्हान् भटान् नियोजितवान्। विश्वकर्माणं स्वसमीपम् आनाय्य शासनसम्बन्धिनः सर्वान् व्यवहारान् विस्तरेण बोधितवान्।

पुनः कदाचित् विश्वकर्मणा सह नन्दिवर्धनः स्वकीयं नूतनं भवनं गतवान्। नन्दिवर्धनस्य वेषं धृत्वा विश्वकर्मा ततः





बहिः आगत्य राजप्रासादं प्रविष्टवान्। नन्दिवर्धनः तु नूतने भवने उपविश्य अध्ययने प्रवृत्तः जातः।

नन्दिवर्धनस्य वेषेण स्थितः विश्वकर्मा राजसभां प्रविष्टवान्। सर्वे तं नन्दिवर्धनम् एव भावितवन्तः। विश्वकर्मा प्रजानां समस्याः सम्यक् ज्ञात्वा तासां परिहारार्थं योजनाः कृतवान्। योजनानां कार्यान्वयनार्थं समर्थान् उद्योगिनः नियोजितवान् चापि।

पूर्वनिश्चयानुगुणं मासद्वयस्य अनन्तरं नन्दिवर्धनस्य समीपं गतवान् विश्वकर्मा।

तम् उक्तवान् नन्दिवर्धनः– "मित्र! अद्य भवान् मम भवने एव तिष्ठतु। अहं बहिः गत्वा भवतः शासनस्य विषये प्रजानाम् अभिप्रायः कीदृशः अस्ति इति ज्ञात्वा आगमिष्यामि" इति।

ततः राजप्रासादं गतवान् नन्दिवर्धनः। तदा तं द्रष्टुम् आगतः मन्त्री निवेदितवान्– "प्रभो! अद्य प्रातः एव दूतद्वारा समग्रस्य देशस्य वार्ताः सङ्गृहीतवान्। गते मासद्वये भवता याः योजनाः व्यवहारे आनीताः ताः सर्वे प्रशंसन्ति। ताः प्रजाहितसाधने नितरां योग्याः इति वदन्ति ते" इति।

प्रतिसप्ताहं समग्रदेशतः गूढचराः वार्ताः सङ्गृह्य मन्त्रिणं निवेदयन्ति स्म। बहोः कालतः अपि मणिमेखलादेशे एषा पद्धतिः व्यवहारे आसीत्।

मन्त्रिणः वचनं श्रुत्वा स्वभवनं गतः नन्दिवर्धनः विश्वकर्माणम् उक्तवान्– "अहम् इतोऽपि कानिचन दिनानि अत्रैव स्थास्यामि। भवान् यथापूर्वं राज्यपालनकार्यं निर्वहतु" इति।

पुनः चत्वारः मासाः अतीताः। तदभ्यन्तरे विश्वकर्मा प्रजाहितकार्येषु गणनीयां प्रगतिं साधितवान् आसीत्। लघुषु अपि ग्रामेषु विद्यालयाः आरब्धाः आसन्। सर्वत्र धर्मशालाः दृश्यन्ते स्म। कृष्यर्थं विशेषप्रोत्साहः जलव्यवस्था च आसीत्। अतः सर्वे नन्दिवर्धनस्य पालनं व्यक्तं प्रशंसन्ति स्म।

अत्रान्तरे काचित् अहितकरी घटना प्रवृत्ता। 'एष दिनेषु राज्यशासनं नन्दिवर्धनः

कुर्वन् नास्ति, नन्दिवर्धनस्य वेषेण विश्वकर्मा राज्यभारं निर्वहन् अस्ति, नन्दिवर्धनः तु पृथगुभवने निवसन् अध्ययनं कुर्वन् समयं यापयन् अस्ति' इति वार्ता कैश्चित् ज्ञाता।

'कार्यभारं निर्लक्ष्य स्वेच्छया कालं यापयतः नन्दिवर्धनस्य अपेक्षया अपि प्रजानां हितं विशेषतः चिन्तयन् विश्वकर्मा एव वरम्' इति भावना अपि केषुचित् उत्पन्ना।

यदा एषा भावना सर्वत्र प्रसृता तदा नन्दिवर्धनः चिन्ताक्रान्तः जातः। 'एतस्य अपवादस्य निवारणं कथम्?' इत्येव तस्य चिन्ता। सः विश्वकर्माणं स्वभवनम् आनाय्य खेदेन उक्तवान्– "भवत्कारणतः प्रजासु मद्विषये दुरभिप्रायः उत्पन्नः अस्ति। भवान् मम वेषेण स्थितवान् यत् तदेव अत्र कारणम्" इति।

तदा विश्वकर्मा शान्तेन स्वरेण उक्तवान्– "प्रभो! मम छद्मवेषधारणम् एव भवतः अपकीर्तेः कारणम् इति चेत् भवान् स्वार्थपरः आसीत् प्रजाहितचिन्तकः न आसीत् इति सिध्यति" इति।

"किं वदति भवान्? अहं स्वार्थपरः इति? एवं वदन् भवान् किं सिंहासनं स्वायत्तीकर्तुम् इच्छति? तत् कदापि न साध्यम्" इति कोपेन उक्तवान् नन्दिवर्धनः।

"प्रभो, क्षन्तव्यः अहम्। कोपावेशमात्रेण एषा समस्या परिहर्तुं न शक्या। अतः शान्ततया विचार्य यत् उचितं तत् करोतु" इति उक्त्वा ततः निर्गतवान् विश्वकर्मा।

नन्दिवर्धनः पुनः अपि चिन्ताक्रान्तः





जातः। 'सङ्कटमये एतस्मिन् सन्दर्भे किं कृतं चेत् योग्यं भवेत्' इति सगाम्भीर्यं चिन्तयति सः। अनन्तरदिने सः सडिण्डिमघोषं वार्ता प्रसारितवान् यत् सर्वे नगरप्रमुखाः मण्डलप्रमुखाः च राजसभायाम् उपस्थिताः भवेयुः इति।

सर्वैः प्रमुखैः युक्तायां राजसभायाम् उक्तवान् नन्दिवर्धनः– "वयं सर्वे किमर्थम् आहूताः इति ज्ञातुं भवतां सर्वेषां कुतूहलं स्यात् एव। प्रजानाम् अभिप्रायः अस्ति यत् अहं कर्तव्यविमुखः सन् स्वेच्छया व्यवहरन् अस्मि इति। प्रजानां निर्णयः शिरोधार्यः मम। अतः अद्य आरभ्य विश्वकर्मा एव शाश्वतरूपेण राजा भविष्यति। प्रजाप्रतिनिधयः भवन्तः एव अत्र साक्षिणः'' इति।

ग्राम-नगर-प्रमुखाः एतं प्रस्तावम् अङ्गीकुर्वन्तः सन्तोषेण करताडनं कृतवन्तः। तदा नन्दिवर्धनः विश्वकर्माणम् उक्तवान्– "प्रजानाम् इच्छा का इति इदानीं सुस्पष्टं ज्ञातम्। अतः शाश्वतरूपेण सिंहासने उपवेष्टुम् अर्हति भवान्'' इति।

तदा विश्वकर्मा नन्दिवर्धनस्य प्रस्तावं तिरस्कुर्वन् सभाम् उक्तवान्– "महाराजः कर्तव्यविमुखः जातः इति तु भवतां भ्रमः। केभ्यश्चित् मासेभ्यः मया यद्यत् कृतं तत् न स्वबुद्ध्या, अपि तु महाराजस्य आदेशानुसारम्। छद्मवेषधारणमात्रे निपुणः अहं कथं वा राज्यभारं निर्वोढुं शक्नुयाम्? एतावत् अपि ज्ञातुं न शक्नुवन्ति वा भवन्तः? इतः परम् अपि नन्दिवर्धनः एव राजा भवेत्'' इति।

विश्वकर्मणः वचनस्य समनन्तरम् एव सभायाम् उपस्थिताः सर्वे– "नन्दिवर्धनमहाराजः जयतात्'' इति करताडनपूर्वकं जयघोषं कृतवन्तः।

तदा नन्दिवर्धनः– "हस्तगतं सिंहासनम् अपि तिरस्कुर्वतः विश्वकर्मणः योग्यता का इति ज्ञातवन्तः खलु भवन्तः? अद्य आरभ्य एषः मम आन्तरङ्गिकः मार्गदर्शकः भविष्यति'' इति सभाम् उक्तवान्।

एषः प्रस्तावः सभायां सन्तोषेण एव सर्वैः अङ्गीकृतः अभवत्। सभाकलापं समाप्य

विश्वकर्मणा सह स्वभवनं प्रति प्रस्थितवान् नन्दिवर्धनः। "वस्तुतः अपि निःस्वार्थी भवान्" इति महाराजम् उक्तवान् विश्वकर्मा।

वेतालः एवं कथां समाप्य– "अये राजन्! अप्रयत्नेन प्राप्तं सिंहासनं किमर्थं तिरस्कृतवान् विश्वकर्मा? राज्यपालने अहम् असमर्थः इति भावितवान् वा सः? वस्तुतः तु राज्यपालने सः समर्थः एव आसीत् खलु? अल्पे काले जनप्रियता या प्राप्ता सा एव अत्र प्रमाणम्। अन्यच्च सः किमर्थं नन्दिवर्धनं स्वार्थिनम् उक्तवान्? अनन्तरं पुनः किमर्थं निःस्वार्थिनम् उक्तवान्? ऐताषां सन्देहानां योग्यं परिहारं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति उक्त्वा मौनम् अतिष्ठत्।

तदा त्रिविक्रमः एवम् उक्तवान्– "विश्वकर्मा राज्यपालने समर्थः एव इत्यत्र सन्देहः एव नास्ति। सः प्रामाणिकः स्वामिभक्तः चापि खलु? तादृशः सः अन्यदीयं सिंहासनं कथं वा अङ्गीकुर्यात्? सिंहासनम् अङ्गीकृतं चेत् अप्रामाणिकता स्वामिद्रोहः च प्रदर्शितः भवेत्। नन्दिवर्धनस्य स्वाभिमानः जागरणीयः आसीत् विश्वकर्मणा। राजा ग्रन्थपरिशीलनं कुर्वन् शासनकार्ये उपेक्षां प्रदर्शयति चेत् देशस्य का वा गतिः स्यात्? अतः सः नन्दिवर्धनं स्वार्थिनम् उक्त्वा जागरितवान्। एवं तर्हि विश्वकर्मा अल्पकालिकं सिंहासनारोहणं किमर्थम् अङ्गीकृतवान् इति प्रश्नः उद्भवेत्। आत्मनः योग्यता सामर्थ्यं च निरूपणीयम् आसीत् तेन। अतः तत् अङ्गीकृतवान् सः। प्रजाहितार्थं राजा सिंहासनम् अपि तिरस्कर्तुम् उद्युक्तः यत् तदर्थं राजानं निःस्वार्थिनम् उक्तवान् विश्वकर्मा" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# स्वार्थसाधनम्

माणिक्यपुरं कश्चन ग्रामः। तत्रत्याः कदाचित् निश्चितवन्तः यत् जनेभ्यः धनं सङ्गृह्य एकं मन्दिरं निर्मातव्यम् इति। भूषणः तस्य ग्रामस्य धनिकः कृषिकः। किन्तु सः नितरां कृपणः।

शिवराजः लक्ष्मणः च धनसङ्ग्रहकार्यं स्वीकृतवन्तौ आस्ताम्। कः कियत् दद्यात् इति आलोच्य ताभ्यां दातॄणां पट्टिका कृता आसीत्। भूषणः कथञ्चित् ज्ञातवान् यत् धनदातॄणां पट्टिकायां स्वनाम नास्ति इति।

कदाचित् भूषणः नगरतः प्रत्यागच्छन् आसीत्। तदा धनसङ्ग्रहार्थम् अटन्तौ शिवराजः लक्ष्मणः च तेन दृष्टौ। सः तौ स्वसमीपम् आहूय उक्तवान्– "ग्रामे निर्मीयमाणस्य मन्दिरस्य निमित्तं धनसङ्ग्रहार्थं भवन्तौ अटतः इति मया श्रुतम्। श्वः प्रातः भवन्तौ मम गृहम् आगच्छताम्" इति।

एतत् श्रुत्वा तौ उक्तवन्तौ– "अस्तु तावत्। श्वः आगमिष्यावः" इति।

अनन्तरदिने प्रातः तौ भूषणस्य गृहं गतवन्तौ। भूषणः तौ मन्दहासपूर्वकं स्वागतीकृतवान्। किञ्चित्कालानन्तरं गृहस्य पुरतः बद्धां धेनुं प्रदर्शयन् शिवराजम् उक्तवान्– "श्रीमन्! एतस्याः कर्णतः पूयः निर्गच्छति। किमर्थम्?" इति।

शिवराजः वृत्त्या पशुवैद्यः। सः धेनुं परीक्ष्य कर्णे किमपि औषधरसं स्थापयित्वा उक्तवान्– "धेनोः घोरः रोगः कोऽपि नास्ति। अहम् औषधं स्थापितवान् अस्मि। अतः चिन्ता करणीया नास्ति" इति।

अनन्तरं भूषणः लक्ष्मणं पश्यन् पृष्टवान्– "लक्ष्मणवर्य! भवान् वास्तुशास्त्रे निपुणः खलु?। मया सद्यः गोष्ठं निर्मातव्यम्। कुत्र भवतु तत्?" इति।

तदा लक्ष्मणः परीक्ष्य एकं स्थलं निश्चित्य रेखाभिः सूचयन् उक्तवान्– "अत्र गोष्ठं निर्मातुं शक्यते" इति।

तद्दिने सायं मन्दिरनिर्माणस्य सर्वे कार्यकर्तारः सम्मिलिताः। तेषां पुरतः शिवराजः लक्ष्मणः च गर्वेण उक्तवन्तौ– "पश्यन्तु भोः, परमकृपणस्य भूषणस्य हस्ततः अपि अस्माभिः ५० रूप्यकाणि सङ्गृहीतानि" इति।

एतत् श्रुत्वा सर्वे आश्चर्यचकिताः। तदा तेषु अन्यतमः वृद्धः ताभ्यां मुखतः प्रवृत्तं समग्रं ज्ञात्वा शिवराजं पृष्टवान्– "भवान् चिकित्सार्थं कियत् धनं स्वीकरोति?" इति।

"प्रायः २० रूप्यकाणि स्वीकरोमि" इति उक्तवान् शिवराजः।

वृद्धः लक्ष्मणं पृष्टवान्– "भवान् वास्तुभूमेः निश्चयार्थं कियत् स्वीकरोति?" इति।

"सामान्यतः सार्धैकशतं रूप्यकाणि स्वीकरोमि" इति उक्तवान् लक्ष्मणः।

"एवं तर्हि भूषणः मन्दिरनिर्माणार्थं ५० रूप्यकाणि यच्छन् भवद्भ्यां स्वकीयं कार्यं निश्शुल्कं कारितवान्। एवं च लाभः तस्य एव" इति हसन् उक्तवान् सः वृद्धः।



चन्दमामानुबन्धः-१६

# ज्ञानभाण्डागारम्

## सः कः स्यात्?

क्रि.श. १९७ तमे वर्षे कश्चन हिन्दुः युवकः अनुचरैः सः समुद्रप्रयाणम् आरब्धवान्। कांश्चन सप्ताहान् यावत् प्रयाणं प्रवृत्तम्। अन्ते तैः कश्चन भूभागः दृष्टः। यावत् तेषां नौका तीरं प्राप्नोत् तावता केचन भटाः तेषाम् उपरि आक्रमणं कृतवन्तः। तेषां भटानां नायकत्वं काचित् स्त्री निर्वहन्ती आसीत्। एषः युवकः धनुषि बाणं योजितवान् चेदपि एकं बाणम् अपि प्रयोक्तुं समर्थः न जातः। सा युवतिः अपि एतं निर्निमेषं पश्यन्ती स्थितवती। युवकः तस्याः समीपं गत्वा अमूल्यानि वस्त्राणि उपायनरूपेण दत्तवान्। अनन्तरं तयोः विवाहः सम्पन्नः। अनन्तरकाले सः युवकः तत्र हैन्दवराज्यं स्थापितवान्।

सः युवकः कः? तेन स्थापितस्य राज्यस्य नाम किम्?

(उत्तरं ३६तमे पृष्ठे)

## अपि भवान् जानाति?

१. 'पाकिस्थानम्' इति नाम केन कृतम्?
२. कदा तेन तादृशं नाम कृतम्?
३. एतस्य नाम्नः अर्थः कः?
४. बुद्धस्य जन्मस्थानं लुम्बिनीवनम् एषु दिनेषु केन नाम्ना आहूयते?
५. तदेव एतत् इति कथं निर्णीतम्?

(उत्तराणि ३६तमे पृष्ठे)

# गान्धारदेशः तक्षशिला च

**भा**रतस्य अद्यतनभूपटे गान्धारनामकः प्रदेशः न दृश्यते। तथापि अस्मासु तादृशः कोऽपि प्रायः न स्यात्, यश्च गान्धारराज्यस्य नाम न श्रुतवान् स्यात्।

अस्माकं प्राचीनसाहित्येषु गान्धारस्य उल्लेखः तत्र तत्र कृतः दृश्यते। अङ्ग-वङ्ग-कलिङ्गादिषु ५४ देशेषु गान्धारदेशः अपि अन्यतमः। धृतराष्ट्रस्य पत्नी गान्धारी गान्धारदेशस्य युवराज्ञी आसीत्। अतः एव तस्याः नाम गान्धारी इति अभवत्। गान्धार्याः सहोदरः शकुनिः गान्धारदेशस्य राजा आसीत्। कौरव-पाण्डवयुद्धे शकुनेः महत्त्वपूर्णं स्थानम् आसीत् इति तु सर्वविदितं खलु?

सिन्धुनदम् उभयतः गान्धारराज्यं प्रसृतम् आसीत्। स च प्रदेशः इदानीं पाकिस्थानदेशे अस्ति, रावलपिण्डी-पेशावर् इति मण्डलद्वयनाम्ना



GANDHARAN ART






व्यवह्रियमाणः अस्ति च।

महाभारतकालात् अनन्तरम् अपि गान्धारस्य प्रसिद्धिः अविच्छिन्ना आसीत्। तस्मिन् राज्ये तक्षशिला पुष्कलावती चेति नगरे उच्चशिक्षणस्य, संस्कृतेः, वाणिज्यस्य च प्रमुखे केन्द्रे आस्ताम्।

सुविख्याते तक्षशिलविश्वविद्यालये जगद्विख्याताः अनेके विद्वांसः विद्याभ्यासं कृतवन्तः आसन्। क्रि.पू. ५ शतके बिम्बसारः मगधदेशं पालयन् आसीत्। तस्य आस्थाने स्थितः सुप्रसिद्धः वैद्यशास्त्रज्ञः जीवकः तक्षशिलाविश्वविद्यालये सप्त वर्षाणि यावत् अध्ययनं कृतवान् आसीत्।

रावलपिण्डीतः ३० कि.मी. दूरे स्थितस्य सरायूकोलानामकस्य रेल्वेस्थानकस्य समीपे तक्षशिलायाः अवशेषाः प्राप्ताः सन्ति।

गान्धारराज्यं किञ्चित्कालं यावत् फारस्साम्राज्यस्य अधीनम् आसीत्। एतस्य राज्यस्य केषुचित् प्रदेशेषु ग्रीक्जनाः अपि स्वकीयम् अधिकारं स्थापितवन्तः आसन्। एतस्य कारणतः एव अत्र उपलभ्यमानायां शिल्पकलायां विदेशीयप्रभावः स्फुटं दृश्यते। इदानीम् अपि गान्धारकलानां विशिष्टं स्थानम् अस्ति।

पर्वतानां मध्ये, खातेषु, उपत्यकासु च निवसताम् असाधारणधैर्येण साहासेन च ख्यातानां पठान्जनानां मातृभूमेः निमित्तं पेशावर् सिंहद्वारम् अस्ति।

# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. कौ प्रमुखौ ग्रन्थौ श्रीकृष्णचरितं विस्तरेण परिचाययतः?

२. त्रीन् प्रमुखान् विषयान् अधिकृत्य कः कविः त्रीणि शतकानि रचितवान्?

३. तेषां शतकानां नामानि कानि?

४. तस्य कवेः जन्म कुत्र अभवत्?

५. अतिप्राचीनः ईजिप्ट्ग्रन्थः कः?

६. स च ग्रन्थः कियत्प्राचीनः?

## उत्तराणि

### सः कः स्यात्?

कौण्डिन्यः। काम्बोजः (काम्बोडिया) इति।

### सामान्यज्ञानम्

१. चौधरी रहमत् अली।
२. १९३३ तमे वर्षे।
३. पवित्रभूमिः इति।
४. 'रुम्मिण्डी' नाम्ना। एतत् नेपालदेशे तराईप्रदेशे अस्ति।
५. तत्रत्यस्य अशोकचक्रवर्तिना निर्मितस्य शिलास्तम्भस्य आधारेण।

### साहित्यज्ञानम्

१. भागवतं महाभारतं च।
२. भर्तृहरिः।
३. नीतिशतकं, शृङ्गारशतकं वैराग्यशतकं चेति।
४ सः उज्जयिन्याः युवराजः आसीत् इति भाव्यते।
५. 'मृतानां ग्रन्थः।'
६. एतस्य कश्चन भागः क्रि.पू. ३,२०० तमे वर्षे एव आसीत् इति श्रूयते।




# कृत्रिमं फलम्

कल्याणपुरे कनकदासः नाम कश्चन सामान्यः गृहस्थः निवसति स्म। तस्य द्वौ पुत्रौ एका पुत्री च सन्ति। ज्येष्ठः पुत्रः मोहनदासः। कनिष्ठः पुत्रः रामदासः। पुत्र्याः नाम उषा इति।

यदा पुत्राः प्राप्तवयस्काः जाताः तदा तेषां विवाहं निर्वर्तितवान् कनकदासः। सपत्नीकौ पुत्रौ पित्रा सहैव निवसतः। पुत्र्याः पतिगृहम् अपि तस्मिन् एव ग्रामे अस्ति।

पितुः मरणं यदा जातं तदा पुत्रौ सम्पत्तिं द्विधा विभज्य पृथग्गृहे वासम् आरब्धवन्तौ। कनकदासस्य पत्नी सुगुणा पर्यायक्रमेण पुत्रयोः गृहे कानिचन दिनानि तिष्ठति।

प्रारम्भिकदिनेषु उभे अपि स्नुषे श्वश्रूम् आदरेण एव दृष्टवत्यौ। किन्तु क्रमशः तयोः व्यवहारे अनादरः दृष्टः। यतः सुगुणायाः समीपे धनम् आभरणानि वा न आसन्। धनव्ययः भवेत् इति आशङ्कया पुत्रौ, यदा सुगुणा अस्वस्था भवति तदा योग्यां चिकित्साम् अपि न कारयतः। मृदुस्वभावा सुगुणा तर्जनपूर्वकं स्नुषे पुत्रौ वा निग्रहीतुम् अपि न शक्नोति। दिनेषु गतेषु, पुत्रौ एवं चिन्तनम् आरब्धवन्तौ यत् मातुः पालनपोषणम् अपि भाराय एव इति।

पुत्रौ तु मातरि प्रीतिमन्तौ एव। तथापि पत्नीवचनम् अनुसरन्तौ तौ तथा व्यवहरतः। अतः पुत्रयोः गृहे दिनानि यापयितुम् एव कष्टम् अनुभवति सुगुणा। रात्रौ सम्यक् निद्राम् अपि न प्राप्नोति।

इतः परम् अपि पुत्रयोः गृहे स्थातुम् अनिच्छन्ती सुगुणा पुत्र्याः उषायाः गृहं गतवती। पुत्री अपि कानिचन दिनानि मातरं प्रीत्या एव दृष्टवती। अन्ते सा वक्तुम् आरब्धवती– 'सम्पत्तिस्वीकर्तारौ तु पुत्रौ।

मातुः पालनपोषणभारः तु पुत्र्याः उपरि' इति।

अग्रे कः मार्गः इति न जानाति सुगुणा। अतः सा साक्षात् ग्रामप्रमुखस्य समीपं गत्वा पुत्राणां व्यवहारं विस्तरेण निवेदितवती। ग्रामे एतस्य ग्रामप्रमुखस्य विशेषादरः आसीत्। तस्य वचनं तिरस्कर्तुं कस्यापि धैर्यं न आसीत्।

सुगुणायाः मुखतः सर्वं श्रुत्वा ग्रामप्रमुखः निश्चितवान् यत् एतस्याः पुत्रौ पुत्री च अनादरं यत् प्रदर्शयन्ति तत्र कारणम् एतस्याः हस्ते धनस्य अभावः एव इति। सः सुगुणाम् उक्तवान्– "भगिनि, भवती चिन्तां मा करोतु। भवत्याः पतिः स्वमरणसमये मम वशे कानिचन आभरणानि दत्तवान् आसीत्। किन्तु एवं दानस्य किं कारणम् इति तेन न उक्तम्। अहं भवत्याः पुत्राभ्यां पुत्र्या च सह वार्तालापं कृत्वा सर्वं समीकरिष्यामि। भवती निश्चिन्ता भवतु" इति।

एतदनन्तरं सः सुगुणायाः पुत्रौ पुत्रीं च आनाय्य उक्तवान्– "मातुः पालनं पुत्राणां कर्तव्यम्। किन्तु भवद्भिः एतत् क्रियमाणं नास्ति। भवद्भिः तस्याः योगक्षेमं न दृष्टं चेदपि तस्याः सुखजीवनार्थम् अन्या एव व्यवस्था अस्ति इति जानन्तु" इति।

तदा सुगुणायाः पुत्रौ पुत्री च आश्चर्येण पृष्टवन्तः– "श्रीमन्! भवता किम् उच्यते? भवतः वचनस्य आशयः अस्माभिः न ज्ञातः" इति।

"कनकदासः स्वमरणसमये एकाम्



आभरणपेटिकां मम अधीनां कुर्वन् उक्तवान् आसीत्– 'एतत् मम पुत्राभ्यां पुत्र्यै च विभज्य दातव्यम्। यदि तेषु कोऽपि स्वमातुः पालने अनादरं प्रदर्शयेत् तर्हि तस्मै भागः दातव्यः नास्ति' इति। भवतां व्यवहारस्य दर्शनेन मम भाति यत् आभरणानि विक्रीय सुगुणायाः पालनव्यवस्थार्थं व्ययीकरोमि इति। एतद्विषये किं वदन्ति भवन्तः?" इति पृष्टवान् ग्रामप्रमुखः।

अश्रुतपूर्वाम् एतां वार्तां श्रुत्वा पुत्रौ पुत्री च ग्रामप्रमुखम् आश्चर्येण पश्यतः। ग्रामाधिकारी अन्तः गत्वा एकां पेटिकाम् उन्नीय बहिः आगतवान्, पेटिकाम् उद्घाटितवान् च। पेटिकायां प्रकाशमानानि आभरणानि आसन्। तेषां मूल्यं पञ्चाशत्सहस्रतः न्यूनं न स्यात् इति चिन्तितं तत्रस्थैः।

एतदनन्तरं सुगुणायाः पुत्राः उक्तवन्तः– "श्रीमन्! गतं तु गतम् एव। मातुः विषये अनादरः प्रकटितः यत् तदर्थं वयं खिन्नाः स्मः। इतः परम् एवं यथा न भवेत् तथा जागरूकाः भवामः" इति।

पुत्रौ पुत्री चापि मातरं साग्रहं निवेदितवन्तः– "भवत्या मम गृहे एव स्थातव्यम्" इति।

सुगुणा पर्यायक्रमेण एकैकं मासं यावत् एकैकत्र स्थातुम् अङ्गीकृतवती। इदानीं तां पुत्राः महता आदरेण पश्यन्ति। तस्याः लघुः इच्छा अपि क्षणमात्रेण पूर्यते तैः।

एवम् एव कालः गतः। सुगुणा सुखेन



जीवनं यापयन्ती अन्ते कदाचित् दिवं गतवती। पुत्राः मातुः अन्त्यसंस्कारं महता आदरेण वैभवेन च कृतवन्तः।

एतदनन्तरं कदाचित् तौ पुत्रौ पुत्री च ग्रामप्रमुखस्य गृहं गतवन्तः। "मातुः आभरणानि विभज्य स्वीकर्तुम् इच्छामः वयम्" इति उक्तवन्तः च। ग्रामप्रमुखः एतत् अङ्गीकृतवान्।

विभागार्थम् एकैकस्य अपि आभरणस्य मूल्यं निश्चेतव्यं खलु? अतः ते शरणनामकं स्वर्णकारं तत्र आनायितवन्तः।

शरणः तानि आभरणानि परीक्ष्य आश्चर्यं प्रकटयन् उक्तवान्– "एतानि सुवर्णेन निर्मितानि सर्वथा न। एतानि तु कृतकानि" इति।

तदा पुत्रयोः पुत्र्याः च मुखात् युगपत् वचनम् आगतम्– "महती वञ्चना एषा! कृतकानि आभरणानि सन्ति अत्र" इति।

तदा ग्रामप्रमुखः हसन् उक्तवान्– "वञ्चना का अत्र? यथा भावः तथा फलम्। आभरणलोभेन भवद्भिः मातुः विषये कृत्रिमा प्रीतिः, कृत्रिमः आदरः च प्रदर्शितः। अतः कृत्रिमानि आभरणानि एव प्राप्तानि। कर्तव्यविस्मरणस्य, लोभात् प्रदर्शितस्य कृत्रिमव्यवहारस्य च फलम् एतत्" इति।

एतत् श्रुत्वा ते आत्मनः व्यवहारं स्मरन्तः लज्जया शिरः अवनमय्य स्थितवन्तः।

तदा ग्रामप्रमुखः पुनः उक्तवान्– "भवद्भिः श्रुतं खलु-यथा बीजं तथाङ्कुरः इति? भवतां क्रिया यादृशी आसीत् तादृशं फलं प्राप्तम्। 'अत्युत्कटैः पुण्यपापैः इहैव फलम् अश्नुते' इति प्राचीनाः वदन्ति। मातुः विषये कृत्रिमप्रीतेः प्रदर्शनं सर्वथा अनुचितम्। अतः भवद्भिः एतादृशं फलं प्राप्तम्" इति।

वस्तुतः तु स्वमरणसमये कनकदासेन ग्रामप्रमुखस्य वशे किमपि आभरणं न स्थापितम् आसीत्। कनकदासस्य पुत्रेषु परिवर्तनम् आनेतुं ग्रामप्रमुखः एव एतादृशीं भूमिकां रचितवान् आसीत्।





# दुष्टशक्तिपीडा

कस्मिंश्चित् ग्रामे अरविन्दो नाम अग्रजः, मुकुन्दो नाम अनुजः च आस्ताम्। तौ श्रीरामपुरे भूमिं क्रीत्वा नूतनं गृहं निर्मितवन्तौ। तयोः गृहं परस्परं संलग्नम् अस्ति। दक्षिणतः मुकुन्दस्य गृहं, वामतश्च अरविन्दस्य गृहम्। गृहप्रवेशकार्यक्रमार्थं तौ वेङ्कटावधानिनम् आहूतवन्तौ आस्ताम्।

वेङ्कटावधानी गृहद्वयम् अपि परीक्ष्य उक्तवान्– "वास्तुशास्त्रानुगुणम् एव अस्ति गृहद्वयम् अपि। तथापि वामतः स्थितं गृहं मुकुन्दः, दक्षिणतः च स्थितम् अरविन्दः स्वीकरोति चेत् वरम्" इति।

"एवं न कृतं चेत् किं भवेत्?" इति पृष्टवन्तौ अरविन्दः मुकुन्दः च।

"भवतोः जन्मनक्षत्रस्य आधारेण ग्रहाणां बलाबलं परीक्ष्य उक्तं मया। परस्परं गृहपरिवर्तनं न कृतं चेत् दुष्टा शक्तिः काचित् भवन्तौ बाधते। कस्यापि प्राणहानिः तु न भविष्यति" इति उक्तवान् वेङ्कटावधानी।

"एतावदेव खलु? दुष्टशक्तौ आवयोः विश्वासः सर्वथा नास्ति। स्वशक्तौ आवयोः विश्वासः अस्ति। स्वशक्तिबलेन तां दुष्टशक्तिपीडां निवारयिष्यावः। एवं खलु मुकुन्द?" इति उक्तवान् अरविन्दः।

"आम् आम्" इति वदन् अङ्गीकारपूर्वकं शिरः चालितवान् मुकुन्दः।

सहोदरयोः वचनं श्रुत्वा कुपितः वेङ्कटावधानी– "मम वचनं पालयितुं भवतोः इच्छा नास्ति। एवं तर्हि किमर्थम् आहूतः अहम्? यत्र मम वचनस्य आदरः नास्ति तत्र वैदिकविधिं निर्वर्तयितुं मम इच्छा नास्ति। अहं गच्छामि। यत् ललाटे लिखितं तत् अनुभवताम्" इति उक्त्वा ततः निर्गतवान्।



अनन्तरम् अरविन्दः मुकुन्दः च वस्तूनि व्यवस्थितं स्थापयितुम् उद्युक्तौ जातौ। कानिचन वस्तूनि स्वगृहस्य अट्टे अपि स्थापितवन्तौ। अरविन्दः स्वगृहस्य अट्टे तैलपात्रद्वयं, दश व्रीहिगोणीः, अन्यानि कानिचन वस्तूनि च स्थापितवान्।

मुकुन्दः अपि स्वगृहस्य अट्टे पञ्च माषगोणीः, अवलेहपात्रद्वयं च स्थापितवान्।

रात्रौ भोजनं समाप्य सर्वे सुप्तवन्तः। शयनानन्तरं किमपि स्मृत्वा उत्थाय तत् आनेतुम् अरविन्दः अट्टम् आरूढवान्। आश्चर्यं नाम अट्टे तैलपात्रद्वयं, व्रीहिगोण्यः च न आसन्। अपि तु माषगोण्यः अवलेहपात्रद्वयं च आसन्। 'एतानि अनुजस्य वस्तूनि' इति जानन् अरविन्दः अनुजस्य गृहं गतवान्।

तत्समये मुकुन्दः अपि दिग्भ्रान्त्या अग्रजं द्रष्टुम् आगच्छन् आसीत्। अरविन्दः तं पृष्टवान्– "भवतः गृहस्य अट्टे मदीयानि वस्तूनि सन्ति वा?" इति।

"आम्। तत् दृष्ट्वा एव अहं भवन्तं द्रष्टुं प्रस्थितः। एवं कथम् अभवत् इत्येव न ज्ञायते। मदीयानि वस्तूनि भवतः गृहस्य अट्टे स्युः वा?" इति पृष्टवान् मुकुन्दः।

"आम्। भवदीयानि वस्तूनि मम गृहस्य अट्टे दृश्यन्ते" इति उक्तवान् अरविन्दः।

'दुष्टशक्तेः कार्यम् एव एतत्' इति भावयन्तौ तौ स्वस्ववस्तूनि स्वगृहे पुनः स्थापितवन्तौ। अनन्तरं शयनं कृतवन्तौ चापि।

रात्रौ अरविन्देन अनेके दुःस्वप्नाः दृष्टाः। 'अहो, दुःस्वप्नाः!' इति वदन् प्रातः अरविन्दः अनुजं द्रष्टुं गतवान्।

तत्समये मुकुन्दः गृहस्य पुरतः उपविश्य किमपि चिन्तयन् आसीत्। तदीये नेत्रे एव सूचयतः स्म यत् तेन रात्रौ निद्रा न प्राप्ता इति।

तं दृष्ट्वा अरविन्दः पृष्टवान्– "किं भोः, एवम् उपविष्टः अस्ति भवान्? मम आगमनम् अपि न ज्ञातं भवता। रात्रौ निद्रा एव न प्राप्ता वा?" इति।

मुकुन्दः अग्रजं पश्यन् उक्तवान्– "भवता अपि रात्रौ निद्रा न प्राप्ता इति भाति। किमर्थम् एवम्?" इति।

अरविन्दः आत्मना दृष्टानां दुःस्वप्नानां विषयम् उक्तवान्। तदा मुकुन्दः उक्तवान्– "आवाम् अस्मदीयानि वस्तूनि स्वगृहं नीतवन्तौ खलु? अनन्तरं शयनं कृतं मया। नेत्रनिमीलनं कृतं चेत् दुःस्वप्नदर्शनम्! अतः निद्रा एव न कृता मया" इति।

"दुष्टशक्तीनां विषये भवतः विश्वासः अस्ति वा?" इति अनुजं मुकुन्दं पृष्टवान् अरविन्दः।

"तादृशः विश्वासः आवयोः नास्ति इति वेङ्कटावधानिनम् उक्तवन्तौ खलु आवाम्" इति उक्तवान् मुकुन्दः।

"एवं खलु? मया तत् विस्मृतम् आसीत्" इति वदन् स्वगृहं गतवान् अरविन्दः।

तस्मिन् दिने सायङ्काले एकत्र उपविश्य तौ सहोदरौ अग्रे किं करणीयम् इत्यस्मिन् विषये चर्चां कृतवन्तौ। 'धैर्येण स्थातव्यम्, अद्य अट्टे एव शयनं करणीयं च' इति निश्चितवन्तौ तौ।

एतदनुगुणं तौ रात्रौ स्वगृहस्य अट्टे शयनं कृतवन्तौ।

प्रातः अरविन्देन दृष्टं यत् सर्वाणि वस्तूनि स्वस्थाने एव सन्ति। एतेन सन्तुष्टः सः उच्चैः पत्नीम् आहूतवान्– "अये!" इति।

तावता तत्र आगता अनुजस्य पत्नी– "किमिदं देवरवर्य! मम गृहस्य अट्टे कथम् आगतः भवान्? कदा अत्र आगतः?" इति आश्चर्येण पृष्टवती।

एतेन भीतः अरविन्दः जागरितः सन् परितः दृष्टिं प्रसारितवान्। स्वस्य अन्यत्र



शयनम्, अनुजपत्न्याः दर्शनं च स्वप्ने जातम् इति जानन् सः समाधानेन निःश्वसितवान्। तावता तत्र आगता तस्य पत्नी आक्षेपस्वरेण उक्तवती– "किमपि आवश्यकं चेत् अधः आगत्य वक्तव्यम्। अट्टे एव स्थित्वा किमिदम् आह्वानम्?" इति।

'अहो दुःस्वप्नः!' इति वदन् अरविन्दः अधः आगत्य मुखादिकं प्रक्षाल्य अनुजस्य गृहं गतवान्। अनुजं पृष्टवान् च– "भवता दुःस्वप्नः दृष्टः वा?" इति।

"न एकः, अपि तु अनेके दुःस्वप्नाः दृष्टाः। दुःस्वप्नकारणतः मम हृदयम् इदानीम् अपि कम्पते। एवं चेत् अचिरात् एव अहम् अस्वस्थः भवेयम्" इति उक्तवान् चिन्ताक्रान्तः मुकुन्दः।

"दुष्टशक्तौ विश्वासः अस्ति वा भवतः?" इति मुकुन्दं पुनः पृष्टवान् अरविन्दः।

"न जाने, किं वक्तव्यम् इति। वेङ्कटावधानिनं भवान् उक्तवान्– दुष्टशक्तौ अहं न विश्वसिमि इति। अहम् अपि तदा सहमतिं प्रदर्शितवान् आसम्" इति उक्तवान् मुकुन्दः।

क्षणकालम् आलोच्य अरविन्दः उक्तवान्– "दुष्टशक्तिः वास्तविकतया अस्ति वा न वा इति अहं तु स्पष्टं न जानामि। किन्तु आवयोः मनसि कश्चन संशयपिशाचः तु प्रविष्टः अस्ति। अतः दुःस्वप्नाः। अतः वेङ्कटावधानिना यथा सूचितं तथा परस्परं गृहपरिवर्तनं कृत्वा तस्य क्षमां प्रार्थयाव। तद्द्वारा गृहप्रवेशकार्यं यथाविधि निर्वर्तयाव च" इति।

"वस्तुतः अहम् अपि तथैव चिन्तयन् अस्मि। गृहपरिवर्तनम् एव करवाव" इति उक्तवान् मुकुन्दः।

सहोदरयोः क्षमायाचनया सन्तुष्टः वेङ्कटावधानी गृहप्रवेशविधिं निर्वर्तितवान्। परस्परगृहपरिवर्तनानन्तरं ताभ्यां सहोदराभ्यां काऽपि पीडा न अनुभूता, दुःस्वप्नः न दृष्टः वा।






यदा कृष्णस्य पत्न्यः, द्रौपदी, अन्याः स्त्रियः च एकत्र सम्मिलिताः वार्तालापं कुर्वत्यः आसन् तदा एव अपरत्र पुरुषाः अपि सम्मिलिताः सन्तः स्नेहमये वार्तालापे मग्नाः आसन्। एवं सर्वे इष्टमित्रैः सह मिलिताः आसन्। तदा एव केचन मुनयः कृष्ण-बलरामयोः दर्शनम् इच्छन्तः तत्र आगतवन्तः।

मुनीनाम् आगमनं ज्ञात्वा पाण्डवाः अन्ये राजानः च गौरवप्रदर्शनार्थम् उत्थाय नमस्कृतवन्तः। कृष्णः बलरामश्चापि आसनात् उत्थाय अग्रे आगत्य श्रद्धया मुनीनां पादपूजां कृतवन्तौ।

मुनयः कृष्णं दृष्ट्वा उक्तवन्तः– "कृष्ण! भवान् न सामान्यः। मानवरूपेण स्थितः आदिदेवः एव भवान्। वयं तत्त्ववेदिनः चेदपि भवतः मायया बद्धाः एव। भवान् तु लीलाविनोदप्रियः, जगन्नाटकसूत्रधारः च। भवतः दर्शनेन धन्यतां प्राप्तुम् आगताः वयम्" इति।

अनन्तरं मुनयः वसुदेवम् उपदिष्टवन्तः यत् यज्ञद्वारा देवऋणात् मुक्तिः प्राप्तव्या इति। वसुदेवः एतत् अङ्गीकृतवान्। यादवाः यज्ञार्थम् अपेक्षिताः सामग्रीः सङ्गृहीतवन्तः। वसुदेवः, तस्य द्वादश पत्न्यः च स्नात्वा नूतनानि वस्त्राणि, आभरणानि च धृत्वा यज्ञदीक्षया दीक्षिताः अभवन्। मुनीनां निर्देशस्य अनुगुणं प्रकृतियज्ञैः विकृतियज्ञैः च यज्ञपुरुषः आराधितः। अनन्तरं दानक्रिया प्रवृत्ता। ऋत्विग्भ्यः धेनवः, धनानि, भूमिः च



दत्ताः।

अन्ते वसुदेवः अवभृतस्नानेन यज्ञविधिं समाप्य भूरिभोजनदानेन परिवारजनान् बन्धून् च सन्तोषितवान्।

कदाचित् देवक्याः मनसि विचारः आगतः— 'मम पुत्रौ बलरामः कृष्णः च न सामान्यौ। अपूर्वशक्तिमन्तौ तौ। कंसेन इतः पूर्वं मम सप्त अपत्यानि मारितानि। तानि इदानीं कुत्र स्युः? कस्याम् अवस्थायां स्युः? तानि आनीय सकृत् कृष्णः प्रदर्शयितुं न शक्नुयात् वा?' इति।

सा स्वकीयाम् इच्छां कृष्णं बलरामं च निवेदितवती। 'भवत्याः इच्छां पूरयिष्यावः' इति उक्त्वा तौ योगमायया सुतललोकं गतवन्तौ।

तत्र स्थितः बलिचक्रवर्ती तौ आदरेण स्वागतीकृत्य अर्घ्यपाद्यादिभिः सत्कृत्य आगमनकारणं पृष्टवान्— "स्वागतं भवतोः। सामान्येन कारणेन भवन्तौ न आगतवन्तौ इति अहं भावयामि। भवतोः कीदृश्या सेवया अहम् आत्मानं धन्यं कर्तुम् अर्हामि इति कृपया निवेदनीयम्" इति।

तदा कृष्णः उक्तवान्— "राजाधिराज! पूर्वं स्वायम्भुवमन्वन्तरे षट् मरीचिपुत्राः ब्रह्मणः पत्नीं कामयमानाः अनुरागेण हसितवन्तः। तदा कुपितः ब्रह्मा— 'भवन्तः राक्षसजन्म प्राप्नुवन्तु' इति तान् शप्तवान्। उद्गीथः, स्मरः, परिष्वङ्गः, पतङ्गः, क्षुद्रभृत्, घृणिः इत्येते ते मरीचिपुत्राः हिरण्यकशिपोः पुत्राः जाताः। अनन्तरजन्मनि मम मातुः देवक्याः गर्भात् जन्म प्राप्य कंसेन मारिताः सन्तः इदानीं भवतः राज्ये निवसन्ति। तान् द्रष्टुम् इच्छति मम माता। अतः तान् मया सह प्रेषयतु। अनन्तरं तान् उत्तमं लोकं प्रति प्रेषयिष्यामि" इति।

बलिः एतत् सन्तोषेण अङ्गीकृतवान्। तान् षट् मरीचिपुत्रान् बलरामकृष्णाभ्यां सह प्रेषितवान् चापि। तान् दृष्टवत्याः देवक्याः महान् सन्तोषः जातः। सा तान् प्रीत्या दृढम् आलिङ्ग्य शिरसि आघ्रातवती। अनन्तरं ते कृष्णस्य अनुग्रहेण सद्गतिं प्राप्य ऊर्ध्वलोकं

गतवन्तः।

कालः गतः। महाभारतयुद्धं समाप्तम्। असङ्ख्याः जनाः मृताः अभवन्। भूभारः अपगतः। युद्धे जयं प्राप्तवन्तं धर्मराजं सिंहासने उपवेश्य कृतकृत्यभावनया कृष्णः द्वारकाम् आगतवान्।

कदाचित् विश्वामित्रः, असितः, कण्वः, दूर्वासाः, भृगुः, आङ्गिरसः, कश्यपः, वामदेवः, अत्रिः, वसिष्ठः, नारदः, इत्यादयः मुनयः कृष्णस्य दर्शनार्थम् आगतवन्तः। तत्समये केचन उद्धताः यादवकुमाराः गर्भिणीस्त्रीवेषं धृतवन्तं साम्बं तेषां पुरतः आनीय– "त्रिकालज्ञाः मुनयः भवन्तः वदन्तु यत् एषा कदा कीदृशम् अपत्यं प्राप्नुयात् इति। एषा लज्जया स्वयं न पृच्छति। अतः वयं पृच्छन्तः स्मः" इति कृतकेन विनयेन उक्तवन्तः।

तेषाम् औद्धत्यं दृष्ट्वा कुपिताः मुनयः– "भोः मूढाः, एतस्य उदरात् कुलनाशकः मुसलः जायते। निर्गच्छन्तु इतः" इति शापं दत्तवन्तः।

मुनीनां शापः व्यर्थः न भवति खलु? परिहासार्थं किमपि कृत्वा कुलकुठाराः जाताः आसन् यादवकुमाराः। किं वा कर्तुं शक्यते? 'एकः पापानि कुरुते फलं भुङ्क्ते महाजनः' इतिवत् केषाञ्चित् औद्धत्यस्य फलं यादवकुलेन अनुभोक्तव्यम् अभवत्।

यादवकुमाराः भीताः सन्तः ततः धावितवन्तः। त्वरया साम्बस्य वेषम् अपनीतवन्तः च। साम्बः उदरवेदनया क्रन्दनं





करोति स्म। अल्पे एव काले तस्मात् कश्चन मुसलः उत्पन्नः। तं मुसलं दृष्ट्वा– "अहो! अविवेकेन कीदृशम् अकार्यं कृतम् अस्माभिः! एतं विषयं ज्ञात्वा यादवाः किं वदेयुः? केन दण्डेन अस्मान् दण्डयेयुः?" इति परस्परं वदन्तः उग्रसेनसमीपं गत्वा प्रवृत्तं समग्रं निवेदितवन्तः।

साम्बस्य उदरतः मुसलः उत्पन्नः इति सर्वैः यादवैः ज्ञातम्। ते आश्चर्यं भीतिं च अनुभूतवन्तः।

उग्रसेनः यादवान् आज्ञापितवान् यत् एतं मुसलं पेषयित्वा चूर्णीकृत्य समुद्रे क्षिपन्तु इति। यादवाः तथैव कृतवन्तः।

तानि मुसलचूर्णानि तरङ्गैः तीरम् आनीतानि। तेभ्यः समुद्रतीरे तृणानि उत्पन्नानि। मुसलपेषणसमये अवशिष्टम् अन्तिमं लघुखण्डम् अपि समद्रे पातितवन्तः आसन् यादवाः। तं लघुखण्डं कश्चन मीनः अगिलत्। स च मीनः केनचित् धीवरेण गृहीतः। सः धीवरः तं मुसलाङ्गभूतम् अयःखण्डं कस्मैचित् व्याधाय दत्त्वा ततः अपेक्षितं वस्तु प्राप्तवान्। स च व्याधः तम् अयःखण्डं बाणस्य अग्रभागे योजितवान्।

एवं यादवकुलस्य नाशार्थं विधिना सन्नाहः आरब्धः आसीत्।

दिनानि गतानि। द्वारकायाम् अशुभसूचकाः उत्पाताः दृष्टाः। एतया घटनया यादवप्रमुखाः सर्वे चिन्ताक्रान्ताः जाताः। 'महती काचित् आपत्तिः आपतिष्यति' इति ते निश्चितवन्तः।

कृष्णः सर्वान् यादवप्रमुखान् सभामण्डपं प्रति आहूतवान्। सर्वान् सम्बोध्य एवम् उक्तवान्–

"मान्याः यादवबान्धवाः। द्वारकायां घोराः उत्पाताः दृश्यमानाः सन्ति। एते अशुभसूचकाः इति भवन्तः सर्वे जानन्ति एव। अतः अस्माभिः एतत्क्षणे एव द्वारकानगरी परित्यक्तव्या। स्त्री-बाल-वृद्धान् शङ्खद्वारं प्रति प्रेषयाम। अन्ये सर्वे सरस्वतीनद्याः तीरे स्थितं प्रभासक्षेत्रं गत्वा ब्राह्मणेभ्यः गो-सुवर्ण-वस्त्राणि, गजान्, अश्वान्,

गृहाणि च दानरूपेण यच्छाम। निःस्वार्थभावनया दानं कृतं चेत् हितं सेत्स्यति। अनिष्टनिवारणार्थं शान्तिकर्माणि अपि कारयाम" इति।

यादवप्रमुखाः कृष्णस्य वचनम् अङ्गीकृतवन्तः। स्त्री-बाल-वृद्धान् शङ्खद्वारं प्रति प्रेषयित्वा महानौकया समुद्रम् अतिक्रम्य प्रभासतीर्थं प्राप्तवन्तः। तत्र ते देवमायया आक्रान्ताः अभवन्। तत्कारणतः ते आनन्दपरवशाः सन्तः मधुपानेन मत्ताः जाताः। अनन्तरम् उन्मादेन परस्परं निन्दन्तः तर्जयन्तः ताडयन्तः च कलहम् आरब्धवन्तः। एषः एव कलहः क्रमशः प्रवृद्धः।

एतस्मिन् कलहे बहवः जनाः, अश्वाः गजाः च मृताः। रथाः च भग्नाः अभवन्। प्रमुखेषु यादवेषु परस्परयुद्धम् आरब्धम्। प्रद्युम्नः साम्बेन सह युद्धं कृतवान्। अक्रूरः भोजेन सह युद्धम् आरब्धवान्। अनिरुद्धः सात्यकिं सम्मुखीकृतवान्। सुभद्रः सङ्ग्रामजितं, सुचारः गदं च सम्मुखीकृतवन्तौ। केन सह अहं युद्धं कुर्वन् अस्ति इत्येव ते न जानन्ति स्म। बन्धुभावः मैत्री च सर्वथा विस्मृता आसीत्। तत्र सर्वत्र यादवानां शवाः एव दृश्यन्ते। मुलसकणैः उत्पन्नैः तृणैः ते परस्परं प्रहारं कृतवन्तः। तानि तृणानि उभयतः अपि तीक्ष्णानि। ये अधः पतन्ति ते तैः तृणैः कर्तिताः भवन्ति स्म।

कृष्णः बलरामः च स्वबान्धवानां रक्षणार्थम् अग्रे गतवन्तौ। कोपान्धाः





मदोन्मत्ताः च यादवाः तयोः उपरि एव आक्रमणं कृतवन्तः। तदा कृष्णः बलरामः चापि कोपं सोढुम् अशक्तौ तृणगुल्मम् उन्मूल्य तेन यादवान् प्रहृतवन्तौ। एवं मुनिनां शापः दवाग्निः इव यादवान् अनाशयत्। सर्वेषां मरणं दृष्ट्वा दीर्घं निःश्वसन् कृष्णः स्वगतम् उक्तवान्– "हन्त! भूभारः न्यूनः जातः" इति।

समग्रः प्रदेशः निर्मानुषः दृश्यते। बान्धवानां मरणं दृष्ट्वा खिन्नः बलरामः योगसमाधिम् आश्रित्य देहत्यागं कृतवान्।

एतत् दृष्ट्वा कृष्णः खेदेन अश्वत्थवृक्षस्य अधः पादस्य उपरि पादं स्थापयित्वा वृक्षम् आलम्ब्य उपविष्टवान् आसीत्। रक्तच्छायायुक्तः तदीयः वामपादः दूरात् दृश्यते स्म।

जरः नाम व्याधः दूरात् कृष्णस्य पादं दृष्ट्वा शुकभ्रान्त्या बाणं प्रयुक्तवान्। तस्य बाणस्य अग्रे मुसलाङ्गभूतः अयःखण्डः योजितः आसीत्।

बाणं प्रयुज्य धावन् आगतः सः व्याधः दिव्यपुरुषे आत्मना कृतं बाणप्रयोगं दृष्ट्वा दिग्भ्रान्तः सन्– "श्रीमन्! अज्ञानेन अपराधः कृतः। क्षन्तव्यः अहम्" इति पादयोः पतित्वा प्रार्थितवान्।

तदा कृष्णः– "भोः, चिन्तां मा करोतु। भवता बुद्ध्या कोऽपि अपराधः न कृतः। मम इच्छानुगुणम् एव एतत् प्रवृत्तम्" इति सान्त्वनवचनानि उक्त्वा तं ततः प्रेषितवान्। तावता कृष्णम् अन्विष्यन् तत्र आगतः दारुकः तं दृष्ट्वा रथात् अवतीर्य नमस्कारभङ्ग्या स्थितवान्।

कृष्णः तम् उक्तवान्– "भवान् द्वारकां गत्वा अस्मदीयानां सर्वेषां मरणं निवेदयतु। बलरामः अपि प्राणान् त्यक्तवान्। ममापि मरणम् आसन्नम्। भवन्तः द्वारकायां मा तिष्ठन्तु। मम इहलोकत्यागस्य अनन्तरं समुद्रराजः द्वारकां मज्जयिष्यति। मम मातापितरौ इन्द्रप्रस्थे अर्जुनस्य आश्रये तिष्ठताम्। यत् प्रवृत्तं तद्विषये अधिकं चिन्तनम् अकुर्वन् निर्लिप्ततया तिष्ठतु भवान् अपि" इति।

दारुकः कृष्णं प्रदक्षिणीकृत्य म्लानवदनः

सन् द्वारकां गतवान्। तत्र अश्रूणि स्रावयन् उग्रसेनस्य पादयोः पतितवान्। वसुदेवम् अपि नमस्कृतवान् सः। दारुकमुखतः तत्रत्यैः सर्वैः यादवानां मरणं ज्ञातम्। सर्वे रोदनं कुर्वन्तः समुद्रतीरं गतवन्तः। प्रभासक्षेत्रं प्राप्तवन्तः च। वसुदेवः, देवकी, रोहिणी च बलरामकृष्णयोः कलेवरस्य अन्वेषणं कृतवन्तः। किन्तु तैः तत् न प्राप्तम्। अतः ते त्रयः अपि हृदयाघातेन तत्रैव मृताः अभवन्।

यादवानां पत्न्यः पत्युः नाम उच्चारयन्त्यः अग्निप्रवेशं कृतवत्यः। बलरामस्य पत्न्यः अपि यत्र सः मृतः तत्रैव चिताम् आरूढवत्यः। कृष्णस्य पत्न्यः अपि चितारोहणं कृतवत्यः।

अर्जुनः तत्र आगत्य मृतानां सर्वेषां बन्धूनाम् उत्तरक्रियां निर्वर्तितवान्। तस्मिन् एव समये द्वारकानगरी समुद्रे मज्जिता जाता। नगरस्थस्य एकस्य देवालयस्य गोपुरं जलात् उपरि दृश्यते स्म।

अर्जुनः अवशिष्टैः बालैः, वृद्धैः, स्त्रीभिः च सह आगत्य वज्रस्य पट्टाभिषेकं कृतवान्।

पट्टाभिषेकस्य अन्ते अर्जुनः कृष्णस्य सन्देशं श्रावितवान्– "वज्र! इतः परं भवान् ज्ञाननिष्ठया समयं यापयतु। महाभारतयुद्धात् या नीतिः ज्ञाता सा कदापि न विस्मर्तव्या। लोके न्यायान्याययोः मध्ये सदाऽपि युद्धं प्रचलति। किन्तु अन्तिमः जयः तु न्यायस्य एव। अतः सदापि न्यायस्य पक्षः एव आश्रयणीयः" इति।

एतदनन्तरकाले पञ्च पाण्डवाः अपि द्रौपद्या सह महाप्रस्थानं कृतवन्तः।

देवलोके कृष्णस्य स्वागतार्थम् इन्द्रादिदेवताः, प्रजापतयः, सिद्धाः, अप्सरसः, विद्याधराः च पुष्पवर्षणं कुर्वन्तः अग्रे आगतवन्तः। कृष्णः विष्णुरूपेण तिष्ठन् सर्वान् कटाक्षेण अनुगृहीतवान्। सत्यं, धृतिः, धर्मः च विष्णुम् अनुसरन्तः वैकुण्ठम् अगच्छन्। कीर्तिः तु भागशः भूलोके स्थितवती। सा लोके कृष्णस्य माहात्म्यं स्मारयन्ती अस्ति।

–(कृष्णावतारकथा समाप्ता।)





# चतुरः मन्त्री

अरबदेशे पूर्वं कश्चन राजा आसीत्। सः राजकार्येषु अनासक्तः सन् सदापि भोगरतः भवति स्म। अतः राज्यस्य स्थितिः शोचनीयतां गता आसीत्।

राज्ञः मन्त्रिणः केचन सन्ति। किन्तु तेषु केचन राजा इव अलसाः भोगासक्ताः च। अन्ये केचन चिन्तयन्ति स्म यत् देशस्य शोचनीया स्थितिः निवेदिता चेत् राज्ञः अदक्षता प्रदर्शिता भवति, तेन राजा क्रुद्धः भवेत् इति।

अन्ते कश्चन मन्त्री निश्चितवान् यत् केनापि उपायेन राजानं वस्तुस्थितिं निवेदयामि एव इति। एकदा सः महाराजेन सह उद्याने विहारार्थं प्रस्थितः। ततः प्रत्यागमनसमये अन्धकारः प्रसृतः आसीत्। तदा समीपतः कुतश्चित् उलूकध्वनिः श्रुतः। मन्त्री गमनं स्थगयित्वा उलूकरवम् आसक्त्या शृण्वन् स्थितवान्।

राजा आश्चर्येण पृष्टवान्– "मन्त्रिवर्य, किं शृण्वन् अस्ति भवान्?" इति।

"महाराज! उलूकौ सम्भाषणं कुरुतः। तत् शृण्वन् अस्मि" इति उक्तवान् मन्त्री।

"किं भवान् उलूकवचनम् अवगन्तुं शक्नोति?" इति पुनः पृष्टवान् राजा।

"आं श्रीमन्!" इति उक्त्वा पुनः किञ्चित्कालं श्रुत्वा मन्त्री उक्तवान्– "प्रभो, इतोऽपि अग्रे श्रोतुं न इच्छामि, न शक्नोमि च। अग्रे गच्छाव तावत्" इति।

"किं तावत् अप्रियं घोरतरं वा तत् सम्भाषणम्?" इति पृष्टवान् राजा।

"प्रभो, तौ तु मूर्खौ पक्षिणौ। तयोः सम्भाषणविषये मां किमपि मा पृच्छतु कृपया" इति खेदेन उक्तवान् मन्त्री।

"किम् उक्तं तादृशं ताभ्यां पक्षिभ्याम्?

"अरबदेशीया जानपदकथा"

माम् अपि किञ्चित् वदतु तावत्" इति उक्तवान् राजा।

"श्रीमन्! तयोः सम्भाषणम् अहम् एव श्रोतुं न शक्नोमि। भवान् कथं वा श्रोतुं शक्नुयात्?" इति पृष्टवान् मन्त्री।

"तावत् अप्रियं वा तत्? तर्हि तौ कठोरं दण्डयिष्यामि। ताभ्यां कीदृशं सम्भाषणं कृतम् इति वदतु प्रथमम्" इति सानुरोधम् उक्तवान् राजा।

"तर्हि शृणोतु तावत्। एतयोः उलूकयोः अन्यतरः वध्वाः पिता, अपरः वरस्य पिता। तयोः मध्ये विवाहविषये वार्तालापः प्रचलति। वरस्य पिता उलूकः वधूपितरम् उलूकं वदति यत् वरदक्षिणारूपेण उध्वस्ताः ५० ग्रामाः दातव्याः इति। तदा वधूपिता उलूकः उक्तवान्– 'पञ्चाशत् ग्रामाः किं, पञ्चशतं ग्रामान् एव दातुं शक्नोमि' इति। 'कथं तत् शक्यते?' इति पृष्टं वरपित्रा उलूकेन। तदा वधूपित्रा उलूकेन उक्तं यत् अस्माकं राज्ञः शासने उध्वस्तानां ग्रामाणाम् अभावः नास्ति एव इति" इति उक्तवान् मन्त्री।

एतत् श्रुत्वा राजा मौनं स्थितवान्। मन्त्री राज्यस्य दुःस्थितेः ज्ञापनार्थम् एव एतां कथां कल्पितवान् इति ज्ञातवान् राजा।

किञ्चित्कालानन्तरं मन्त्री महाराजं पृष्टवान्– "प्रभो, एतौ उद्धतौ उलूकौ केन दण्डेन दण्डनीयौ?" इति।

"तौ उलूकौ वास्तविकं विषयम् उक्तवन्तौ। अतः तयोः दण्डनं किमर्थम्? अद्यैव भवन्तं प्रधानमन्त्रिरूपेण नियोजितवान् अस्मि। तेन वरपित्रा उलूकेन वरदक्षिणारूपेण एकोऽपि उध्वस्तग्रामः यथा न प्राप्येत तथा करणीयं भवता" इति उक्तवान् राजा।

एतस्याः घटनायाः कारणतः महाराजे महत् परिवर्तनं सञ्जातम्। सहः भोगासक्तिं पूर्णतः परित्यज्य शासनकार्ये मनः कृतवान्। क्रमशः कृषिक्षेत्रे वाणिज्ये च प्रगतिः अभवत्। राज्ञि जातं परिवर्तनं दृष्ट्वा प्रजाः सर्वाः सन्तुष्टाः।





# स्नानगृहस्य अर्गलम्

वरदेन्द्रः नाम कश्चन गृहस्थः पूर्वम् आसीत्। सः कदाचित् स्नानार्थं स्नानगृहं प्रविष्टः अर्गलेन द्वारं कीलितवान्। स्नानस्य समाप्तेः अनन्तरं सः द्वारम् उद्घाटयितुं प्रयत्नं कृतवान्। किन्तु तेन न शक्तम्। अर्गलं दृढं संलग्नम् आसीत्।

दैववशात् स्नानगृहे कोणे कश्चन मुद्गरः दृष्टः वरदेन्द्रेण। सः तेन मुद्गरेण अर्गलं द्वित्रवारं बलात् ताडितवान्। तदा तत् अपसृतम् अभवत्।

स्नानगृहात् बहिः आगतः वरदेन्द्रः गृहसदस्यान् उक्तवान्– "अद्य स्नानगृहस्य अर्गलं महता कष्टेन अपसारितवान्। अतः स्नानार्थं गतेन केनापि स्नानगृहस्य द्वारम् अर्गलेन न कीलनीयम्। कीलितं चेत् पुनः द्वारस्य भङ्गः करणीयः भवेत्" इति।

वरदेन्द्रस्य कनिष्ठः पुत्र तक्षकम् आनेतुं गतवान्। किन्तु दौर्भाग्यं नाम तक्षकः कार्यनिमित्तम् अन्यं ग्रामं गतवान् आसीत्। तस्य प्रत्यागमनं तु सप्ताहस्य अनन्तरम्।

वरदेन्द्रस्य गृहस्य सदस्याः सर्वेऽपि एतावत्पर्यन्तं द्वारं कीलयित्वा एव स्नानं कृतवन्तः आसन्। चिरकालात् अभ्यस्तं खलु एतत्। अतः स्नानार्थं गतःवरदेन्द्रस्य ज्येष्ठः पुत्रः अनवधानवशात् द्वारं कीलितवान् एव। अर्गलस्य अपसारणार्थं तेन अर्धघण्टां यावत् प्रयत्नः कृतः। एतया घटनया वरदेन्द्रस्य गृहस्य सर्वे सदस्याः द्वारकीलनविषये जागरूकाः जाताः।

इतः चतुर्थे दिने रामचन्द्रः नाम कश्चन बन्धुः वरदेन्द्रस्य गृहम् आगतवान्। सः नितरां कृशकायः। प्रवेशसमनन्तरम् एव सः– "अहो तापबाधा! आतपतः नितरां बाधितः अस्मि अहम्। शरीरं समग्रं स्विन्नम्



अस्ति। प्रथमं स्नानं करोमि। अनन्तरं योगक्षेमादिविषये वार्तालापः" इति वदन् स्नानगृहं प्रविष्टवान्। द्वारपिधानशब्दः अर्गलयोजनशब्दः च बहिः स्थितैः श्रुतः।

एतं शब्दं श्रुत्वा वरदेन्द्रः क्षणकालं दिग्भ्रान्तः। यतः 'अर्गलं न योजनीयम्' इति सः बन्धुः न स्मारितः आसीत् तेन। अन्तः गतः बन्धुः बहिः आगन्तुं न शक्तः चेत् द्वारभञ्जनम् एव शरणम्।

"मुद्गरः स्नानगृहस्य अन्तः अस्ति इति कथनं वरम्" इति पत्नीम् उक्तवान् वरदेन्द्रः।

"किमर्थं वृथा भीतिः उत्पादनीया? अर्गलवार्ता उक्ता चेत् सः अस्मान् द्वारं समीकारयितुम् अनिच्छतः कृपणान् भावयेत्। यदा सः द्वारस्य उद्घाटनार्थं प्रयतते तदा अकस्मात् प्रवृत्तम् एतत् इति वदाम तावत्" इति सूचितवती वरदेन्द्रस्य पत्नी।

यावत् तौ एवं वार्तालापं कुर्वन्तौ आस्तां तावता पुत्रादयः अपि तत्र आगताः। अत्रान्तरे अर्गलापसरणस्य शब्दः श्रुतः। रामचन्द्रः द्वारम् उद्घाट्य बहिः आगत्य– "हन्त! इदानीम् उज्जीवितः अहम्" इति उत्साहेन उक्तवान्।

वरदेन्द्रकुटुम्बीयाः सर्वे रामचन्द्रम् आश्चर्येण पश्यन्ति। एतत् दृष्ट्वा रामचन्द्रः पृष्टवान्– "किमर्थं भवन्तः सर्वे एकत्र सम्मिलिताः सन्तः स्नानगृहात् बहिः आगच्छन्तं माम् एवं पश्यन्ति?" इति।

"न कोऽपि विशेषः। स्नानार्थं जलं पर्याप्तमात्रेण आसीत् वा? फेनकादिकम् आसीत् वा? कोऽपि क्लेशः न जातः खलु? एतत् प्रष्टुम् एव सर्वे अत्र आगताः" इति उक्तवान् वरदेन्द्रः।

"दूरात् आगतवन्तं सर्वे प्रयाणविषयकं कष्टसुखं पृच्छन्ति। भवन्तः तु सम्भूय स्नानविषये पृच्छन्तः सन्ति। एतत् तु आश्चर्यकरम् एव। स्नाने किम् असौकर्यं भवेत्? यदि किमपि आवश्यकं स्यात् तर्हि अहं स्वयं पृच्छेयम्" इति उक्तवान् रामचन्द्रः।

वरदेन्द्रः कृत्रिमं हासं प्रदर्शितवान्। गृहसदस्याः कार्यव्याजेन एकैकशः ततः

निर्गतवन्तः। वरदेन्द्रः चिन्तितवान् यत् सौभाग्यवशात् अर्गलं सम्यक् जातं स्यात् इति। अतः सः अनन्तरदिने अर्गलेन द्वारं कीलयित्वा स्नानं कृतवान्। किन्तु स्नानानन्तरम् अर्धघण्टात्मकेन प्रयासेन तेन द्वारं कथञ्चित् उद्घाटितम्।

यदा सः बहिः आगतः तदा तत्र आगतः रामचन्द्रः पृष्टवान्– "किं श्रीमन्! स्नानगृहे मुद्गरप्रहारः निरन्तरं श्रूयते स्म। भवान् तक्षणकार्यम् अपि जानाति वा?" इति।

तदा वरदेन्द्रः दीर्घं निःश्वसन् उक्तवान्– "त्रिचतुर्भ्यः दिनेभ्यः स्नानगृहस्य अर्गलं सम्यक् नास्ति। तक्षकः ग्रामे नास्तीत्यतः समीकारयितुम् अपि न शक्तम्। अतः वयम् अर्गलेन द्वारम् अकीलयित्वा एव स्नानं कुर्वन्तः आस्म। ह्यः भवान् लीलया अर्गलम् अपसारयितुं शक्तवान्। एतत् दृष्ट्वा अहं चिन्तितवान् यत् सौभाग्यवशात् अप्रयत्नेन एव अर्गलं सम्यक् जातं स्यात् इति। अतः अद्य अर्गलेन कीलयित्वा स्नानं कृतवान्। द्वारस्य उद्घाटने नितरां श्रान्तः जातः च" इति।

"एवं वा कथा!" इति उच्चैः हसितवान् रामचन्द्रः।

"किमर्थं तथा उच्चैः हसति?" इति आश्चर्येण पृष्टवान् वरदेन्द्रः।

तदा रामचन्द्रः हासं निगृह्य– "अहं कृशकायः खलु? मम गृहे सर्वे मम कृशताम् आश्रित्य उपहासं कुर्वन्ति। मम गृहस्य स्नानगृहस्य अर्गलम् अपि उद्घाटने किञ्चिदिव क्लेशं जनयति। गृहसदस्याः सर्वे तत् अर्गलम् अपसारयन्ति चेदपि अहं तु तस्य अपसारणे महत् कष्टम् अनुभवामि। 'एतत् जानन्ति चेत् गृहसदस्याः पुनरपि उपहसेयुः' इति भावयन् अहं स्नानार्थं यदा गच्छामि तदा अर्गलस्य शब्दं करोमि। किन्तु अर्गलेन न कीलयामि। पूर्वाभ्यासवशात् ह्यः अपि मया तथैव कृतम्" इति उक्त्वा पुनरपि हसितवान्।

एतत् श्रुत्वा वरदेन्द्रकुटुम्बीयाः सर्वे अपि उदरोपपीडं हसितवन्तः।






# सौभाग्यप्राप्तिः

अमरपुरे पूर्वं कश्चन कृषिकः आसीत्। सः निर्धनः, किन्तु धर्ममार्गेण जीवति। तस्य पत्नी अपि धर्मपरायणा एव। एतस्य कृषिकस्य पुत्राः अधिकाः। अतः सः तत्पत्नी च महता श्रमेण कार्यं कुरुतः चेदपि कुटुम्बनिर्वहणं सुखेन न भवति स्म। यवागूभोजनं तस्मिन् गृहे सामान्यम्। यदि अन्नं कदाचित् कृतं स्यात् तर्हि गृहे उत्सवः! किन्तु तादृशः सन्दर्भः नितरां विरलः। मासे मासद्वये वा एकवारं तादृशः सन्दर्भः आगच्छेत्, तावदेव।

एवं गृहे दारिद्र्यदेवी स्थिरं स्थितवती चेदपि तौ दम्पती भोजनसमये उपस्थितम् अतिथिं तथैव न प्रेषयतः। गृहे यः पाकः अस्ति तमेव विभज्य तस्मै अपि यच्छतः।

एकदा तौ पुत्रैः सह भोजनार्थम् उपविष्टवन्तौ आस्ताम्। तावता कश्चन भिक्षुकः तयोः गृहम् आगतः। भिक्षां प्रार्थितवान् च। तत्समये कृषिकः पत्न्या सह यवागूं पिबन् आसीत्। भिक्षुकस्य आगमन दृष्ट्वा तौ स्वभागे किञ्चित् पृथक्कृत्य दत्तवन्तौ।

एतेन नवचेतनं प्राप्तवान् सः भिक्षुकः। तस्य मुखे विलक्षणा कान्तिः दृष्टा 'अहो! उज्जीवितः अहम्' इति स्वगतम् उक्तवान् सः भिक्षुकः।

अनन्तरं सः कृषिकं स्वसमीपम् आहूय उक्तवान्– "भवादृशौ धर्मपरौ इतः पूर्वं कुत्रापि न दृष्टौ मया। भोः, भवान् यवागूपात्रम् आनयतु। तत् अक्षय्यपात्रं करिष्यामि" इति।

कृषिकपत्नी अन्तः गत्वा यवागूपात्रम् आनीय भिक्षुकस्य पुरतः स्थापितवती। भिक्षुकः मन्त्रम् अस्पष्टं जपन् पात्रम्

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

आवरणेन पिधाय– "इतः परं भवद्भ्यां भोजनार्थं कष्टम् अनुभोक्तव्यं नास्ति। राजप्रासादे यादृशः पाकः सज्जीक्रियते तादृशः पाकः अत्र प्रतिदिनं प्राप्यते" इति उक्त्वा ततः निर्गतवान्।

कृषिकदम्पत्योः तु भिक्षुकस्य वचने विश्वासः नास्ति। किन्तु सायङ्काले यदा कृषिकपत्नी यवागूपाकार्थं मृत्पात्रस्य आवरणम् अपसारितवती तदा तीव्रः भक्ष्यगन्धः उत्पन्नः। ततः भक्ष्यभोज्यादीनि अपि आगतानि। गृहसदस्याः सर्वे सन्तोषेण तानि खादितवन्तः। खादनानन्तरम् अपि पात्रे भक्ष्याणां परिमाणं यथापूर्वम् आसीत्। वस्तुतः अपि तत् राजभोजनम् एव। तत्रत्यानां भक्ष्याणां नामानि अपि न जानन्ति ते।



तस्मात् दिनतः कृषिकस्य गृहे प्रतिदिनम् अपि राजभोजनम्। यावन्तः अतिथयः आगच्छन्ति तेभ्यः अपि तदेव। गृहम् आगतान् अतिथीन् निवेदयति स्म कृषिकः– "मया यत् परिविष्यते तत् सन्तोषेण स्वीकरणीयम्। किन्तु एतस्मिन् विषये कृपया किमपि न प्रष्टव्यम्" इति।

कृषिकस्य गृहे भोजनं कृत्वा गताः इतरान् वदन्ति स्म– "अहो, कृषिकगृहस्य भोजनस्य रुचिः! अहो सौगन्ध्यम्! राजप्रासादात् ऋते एतादृशं भोजनम् अन्यत्र न स्यात्। एतादृशः विशिष्टः पाकः कुतः इति तु न ज्ञायते। किमपि न प्रष्टव्यम् इति वदति सः कृषिकः" इति।

कृषिकस्य गृहे एवं राजभोजनस्य प्राप्तिः। तत्र राजप्रासादस्य पाकशालायां तु सज्जीकृते पाके ह्रासः दृश्यते। एषः विषयः सर्वप्रथमं प्रधानपाचकेन ज्ञातः। राजकुटुम्बार्थं यावत् आवश्यकं तावत् सः पचति स्म चेदपि परिवेषणसमये बहुधा न्यूनता दृश्यते स्म। भक्ष्य-भोज्य-पायसादीनाम् अपि एषा एव कथा!

'कोऽपि चौर्यं कुर्वन् स्यात्' इति भावयित्वा सः प्रधानपाचकः जागरूकतया परिशीलितवान्। कदापि कस्यापि गमनागमनं न दृष्टं तेन। किन्तु कृते पाके



ह्रासः तु अनुवर्तते एव।

अन्ते सः महाराजं सर्वं निवेदितवान्। महाराजः अत्र न विश्वसितवान्। किन्तु भक्ष्यभोज्यादीनां ह्रासस्य परीक्षणानन्तरं तु अङ्गीकरणीयम् एव अभवत् तेन।

राजा मन्त्रिणम् एतां वार्ताम् उक्तवान्। मन्त्री अपि जागरूकतया परिशीलितवान्। भोजनपदार्थेषु ह्रासः दृश्यते इति सत्यम् एव इति अङ्गीकृतं तेन। एतावता कर्मकराणां द्वारा प्रासादे प्रवर्तमानायाः एतस्याः घटनायाः वार्ता सर्वत्र प्रसृता।

एवम् एकत्र राजप्रासादे पाकस्य चौर्यं प्रचलति इति वार्ता। अपरत्र निर्धनस्य कृषिकस्य गृहे राजभोजनं प्राप्यते इति वार्ता। एवं वार्ताद्वयम् अपि श्रुत्वा जनाः निश्चितवन्तः यत् राजप्रासादे सज्जीक्रियमाणः पाकः कथमपि कृषिकगृहे दृश्यते इति। एतादृशी किंवदन्ती मन्त्रिणा राज्ञा चापि श्रुता।

एतत् श्रुत्वा मन्त्री राजानम् उक्तवान्– "एवं भवितुं न अर्हति एव। तस्य निर्धनस्य गृहं नगरात् बहिः अस्ति। कृषिकः सज्जनः इति सर्वे वदन्ति। सः ततः अस्माकं पाकशालाम् आगत्य पाकवस्तूनि चोरयेत् इति कल्पयितुम् अपि न शक्यते। यदि सः महता कष्टेन राजप्रासादं प्रविशेत् चेदपि अमूल्यानि वस्तूनि नयेत्। दिने द्विवारम् आगत्य पाकपदार्थान् कथं वा चोरयेत् सः? तावत् सुकरं न खलु तत्" इति।

परीक्ष्य एव वस्तुस्थितिः ज्ञातव्या इति निश्चितवन्तौ राजा मन्त्री च। अनन्तरं तौ ग्रामीणवेषं धृत्वा पादाभ्याम् एव कृषिकस्य गृहं गतवन्तौ।

गमनात् पूर्वं तौ पाकाशालायां कीदृशः पाकः सज्जीक्रियमाणः अस्ति, किं भक्ष्यं क्रियते इति विचार्य ज्ञातवन्तौ आस्ताम्।

मध्याह्ने भोजनसमये तौ कृषिकस्य गृहं प्राप्तवन्तौ।

"आवां सुदूरात् आगतवन्तौ। नितरां श्रान्तौ बुभुक्षितौ च स्वः। अद्य अत्र भोजनं किमपि लभ्येत वा?" इति कृषिकं पृष्टवन्तौ तौ।

कृषिकः उत्थाय आगत्य तौ आदरेण अन्तः नीत्वा भोजनार्थम् उपवेश्य पत्नीं 'परिवेषणं करोतु' इति सूचितवान्।

तौ उक्तवान् चापि– "आतृप्ति भोजनं करणीयम्। किन्तु भोजनविषये किमपि न प्रष्टव्यम्" इति।

दर्शनमात्रेण एव राज्ञा मन्त्रिणा च ज्ञातं यत् एषः पाकः राजप्रासादे सज्जीकृतः एव इति। तौ तु भोजनार्थं न आगतौ खलु?

अतः तौ कृषिकं पृष्टवन्तौ– "धनिकैः अपि सज्जीकर्तुम् असाध्यं पाकं निर्धनः भवान् कथं सज्जीकर्तुं शक्तवान् इति वयं पृच्छामः चेत् कः दोषः?" इति।

"पाकविषये कृपया किमपि न प्रष्टव्यम् इति नम्रं निवेदयामि" इति विनयेन उक्तवान् कृषिकः।

"पाकप्राप्तेः रहस्यं न उक्तं चेत् आवां भोजनम् एव न कुर्वः" इति उक्तवन्तौ राजा मन्त्री च।

कृषिकः मौनं स्थितवान्। "अन्याय्यमार्गेण प्राप्तं भोजनं न स्वीकुर्वः आवाम्" इति उक्तवान् मन्त्री।

"अन्याय्येन प्राप्तं न एतत्" इति उक्त्वा कृषिकः अनिवार्यतया प्रवृत्तं समग्रं निवेदितवान्।

एतत् श्रुत्वा नितरां कुपितः राजा झटिति उत्थाय समीपस्थं दण्डम् उन्नीय मृत्पात्रं भञ्जयित्वा मन्त्रिणा सह मौनं ततः



निर्गतवान्।

कृषिकस्य पत्नी भग्नस्य मृत्पात्रस्य भागान् सङ्गृह्णती अश्रूणि स्रावितवती।

"अये! कानिचन दिनानि यावत् सौभाग्यवशात् राजभोजनं प्राप्तम्। ततः पूर्वं तत् न आसीत् खलु? अदृष्टं समाप्तम् इति भावयतु। यवागूभोजनं तु अस्ति एव खलु?" इति तां, पुत्रान् च सान्त्वनवचनानि उक्तवान् कृषिकः।

कृषिकस्य गृहे अक्षयपात्रं भञ्जयित्वा राजा यदा प्रासादम् आगतः तदा तत्र पाकः एव न आसीत्। निराहारं स्थातव्यम् आपतितं तेन।

"महाप्रभो! चित्रं नाम पाकार्थं चुल्लेः

उपरि यदा वस्तूनि स्थापयामः तदैव तानि अदृश्यतां गच्छन्ति। भवान् एव स्वयं परिशीलयतु तावत्। सर्वाणि पात्राणि रिक्तानि सन्ति। पाकार्थं षड्वारं मया शाकादीनि सज्जीकृतानि। किन्तु सर्वदा अपि चुल्लेः उपरि स्थापनस्य समनन्तरम् एव तानि अदृश्यानि अभवन्'' इति निवेदितवान् प्रधानपाचकः।

मन्त्री राज्ञः निमित्तं स्वगृहतः भोजनम् आनायितवान्। यदा तत् राजप्रासादम् आनीतं तदैव अदृश्यम् अभवत्।

कृषिकगृहे कोपेन यत् अकार्यं कृतं तस्यैव फलम् एतत् इति ज्ञातवान् राजा। सः मन्त्रिणा सह कृषिकस्य गृहं गत्वा कृषिकं नमस्कृत्य– ''महात्मन्! मया कुपितेन यत् अकार्यं कृतं तत् क्षाम्यतु कृपया। भवतः या हानिः जाता तस्याः पूरणार्थं व्यवस्थां करिष्यामि। इतः परं मम पाकशाला एव भवतः अपि। प्रतिदिनं मम पाकशालायां यावत् पच्यते तत्र अर्धं भागं भवतः गृहं प्रति प्रेषयिष्यामि। मया मत्कुटुम्बीयैः च आहारः यथा प्राप्येत तथा करोतु। अस्मान् मा मारयतु कृपया'' इति प्रार्थितवान्।

राज्ञः वचनं श्रुत्वा दिग्भ्रान्तः कृषिकः राज्ञः पादयोः पतित्वा– ''महाप्रभो! मया किमपि न कृतम्। मनसा अपि भवताम् अहितं न चिन्तितम्। मृत्पात्रस्य भङ्गेन मम पत्नी रुदती आसीत्। 'चिन्तां मा करोतु, यवागूः तु अस्ति एव' इति पत्न्याः सान्त्वनं कृतवान् अहम्। भवन्तं क्षन्तुम् अहं कः? सः अक्षयपात्रदाता महानुभावः केवलं, भवन्तं क्षन्तुम् अर्हति'' इति उक्तवान्।

तावता राजभवनात् वार्ता आगता यत् प्रासादस्य पाकशालायां पाकः सिध्यन् अस्ति इति।

तद्दिनतः राजा स्वपाकशालायां सज्जीकृतस्य पाकस्य अर्धं भागं कृषिकस्य गृहं प्रति प्रेषयितुम् आरब्धवान्। कृषिकः तु सन्तोषेण भोजनं कुर्वन्, यथाशक्ति अतिथीन् अपि भोजयन् सन्तोषेण स्थितवान्।





## अतिवेगवान् झञ्झावातः

अमेरिकादेशे न्यू हाम्पषैर् इत्यत्र समुद्रस्तरतः ६,२६२ पादमितोन्नते स्थले 'मौण्ट् वाशिंगटन् अब्सर्वेटरी' अस्ति। वातावरणज्ञानार्थं स्थापितस्य एतस्य केन्द्रस्य उल्लेखैः ज्ञायते यत् इतः पूर्वं प्रपञ्चस्तरे अद्वितीयः झञ्झावातः १९३४ तमे वर्षे प्रतिघण्टं २३१ मैल् वेगेन वातम् आसीत् इति।



## हेर्कुलस्

दक्षिणाफ्रिकादेशस्थः बीटल् नामकः कीटः षडङ्गुलदीर्घः भवति। एतस्य शरीरे शृङ्गसदृशानि दीर्घाणि अवयवानि भवन्ति। स्त्रीकीटे आकर्षणं जनयितुं तेन एतत् उपयुज्यते इति श्रूयते।

दक्षिणध्रुवतः २६४ मैल् दूरे केवलं, सजीवानि सस्यानि दृश्यन्ते। पर्वतप्रदेशेषु लज्जालुसस्यसदृशानि लिचेन् जातीयानि पुष्परहितानि सस्यानि दृश्यन्ते।

## दक्षिणध्रुवप्रदेशे सस्यानि



# अलं पत्रलेखनेन

| | |
|---|---|
| धीरेन्द्रः - अये गणेश, किं कुर्वन् अस्ति? | Hi, Ganesh, What are you doing? |
| गणेशः - पत्रं लिखन् अस्मि। | I am writing a letter. |
| धी - कस्मै तावद्दीर्घं पत्रम्? | Such a long letter, to whom? |
| ग - गङ्गाधराय। तस्य तु पत्रं बहु पूर्वम् एव आगतम् आसीत्। अद्य समयं परिकल्प्य उत्तरं लिखन् अस्मि। | To Gangadhar. I had a letter from him quite sometime back. And I found time today to write him. |
| धी - अलं पत्रलेखनेन। | Your may stop writing. |
| ग - किमर्थम्? मत्तः किमपि कार्यं निरीक्षते वा भवान्? | Why? You want me to do something else? |
| धी - तथा न भोः। गङ्गाधरः परश्वः अत्र आगमिष्यति। | Not that. Gangadhar is coming here day after tomorrow. |
| ग - परश्वः? आगमनवार्ता एव नास्ति! | Day after tomorrow? There has been no news about his coming! |
| धी - मह्यम् अद्य पत्रम् आगतम्। भवान् अपि सूचनीयः इति तत्र मां सूचितवान् अस्ति सः। | I received his letter today. He has asked me to inform you. |
| ग - अर्धघण्टां यावत् उपविश्य सुदीर्घं पत्रं लिखितवान् आसम्। सर्वं व्यर्थं जातम्। | I sat for half an hour and wrote this long letter . Now it is all a waste. |
| धी - चिन्तां मा करोतु। यदा सः आगमिष्यति तदा तस्मै एतत् पत्रं ददातु। तावद्दीर्घं किं लिखितवान्? ददातु, पश्यामि तावत्। | Don't bother. Give him the letter when he comes. What is it that you have written in such length? Give it to me, let me see. |
| ग - अये, मा स्पृशतु। वैयक्तिकः विषयः अस्ति तत्र। अस्थाने कुतूहलं मास्तु भवतः। | No. Don't touch it. There are some personal things. Don't be curious where it is not necessary. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां जून-९० मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अप्रैल-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

## फेब्रवरी 'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **अस्ति बुभुक्षा, किन्तु यदि स्वीकुर्यां, कुप्यति माता।**

द्वितीयचित्रम् - **नास्ति बुभुक्षा, किन्तु यदि न स्वीकुर्यां, कुप्यति माता।**

प्रेषकः - श्री पि. शङ्करभट्टः, १३, काळप्प ब्लाक्, श्रीनगरम्, बेङ्गलूरु-५६००५०


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अपत्यम् - | Child |
| अपसृतम् - | Slipped |
| अर्गलम् - | Wooden bolt |
| अवतीर्णवान् - | Got down |
| अवलेहः - | Pickle |
| आतपः - | Sunshine |
| आपणिकः - | Shopkeeper |
| उदरोपपीडम् - | To his heart's content |
| उध्वस्तः - | Deserted |
| उपत्यका - | Land at the foot of a mountain |
| उलूकः - | Owl |
| कार्यान्वयनम् - | Putting into action |
| किंवदन्ती - | Rumour |
| कृशकायः - | Lean man |
| खलीनम् - | Part of a bridle |
| गोष्ठम् - | Cowshed |
| तक्षकः - | Carpenter |
| तक्षणकार्यम् - | Carpentry |
| तुषारः - | Fog |
| दाता - | Donor |
| देवरः - | Husband's brother |
| निर्निमेषम् - | Without winking |
| निर्वाचनम् - | Election |
| परिमाणम् - | Measure |
| परीवर्तः - | Change (Small coins) |
| पूयः - | Pus |
| फेनकम् - | Soap |
| बन्दी - | Prisoner |
| मध्यभावः - | Average |
| मुद्गरः - | Hammer |
| मुसलः - | Wooden pestle |
| यवागूः - | Gruel |
| लज्जालुसस्यम् - | Touch-me-not plant |
| वातम् - | Blew |
| वास्तुशास्त्रम् - | Science of architecture |
| विपणिः - | Market |
| व्रीहिः - | Paddy |
| शाटिका - | Saree |
| सकृत् - | Once |
| समीकरणम् - | Repair |
| स्नानगृहम् - | Bath room |
| स्विन्नः - | Sweated |